# कादम्बरी

( संक्षिप्तकथा )

बाणभट्टकृतारम्भा तत्सुतेन समापिता ।
अपूर्वां प्रीतिमाधत्ते श्रुता कादम्बरीकथा ॥

रामकृष्ण शास्त्री

# कादम्बरी

( संक्षिप्तकथा )

बाणभट्टकृतारम्भा तत्सुतेन समापिता ।
अपूर्वां प्रीतिमाधत्ते श्रुता कादम्बरीकथा ।।



सम्पादक :
रामकृष्ण शास्त्री




मूल्यम् ५-००

प्रकाशक :

**श्रीरामप्रकाशन**

श्रीरघुनाथपुरा, जम्मू (तवी)



चित्रकार :

**देवदास**



प्रथम संस्करणम् } १०००
अगस्त १९६५ }

मूल्यम् ४-०० XXX 5-00



मुद्रक :

**शेर-ए-स्टेट प्रिंटर्स,**

गुमट बाज़ार, जम्मू

फोन : ५५२५

## ❀ समर्पणम् ❀

द्विगर्तभूषणानां, सर्वशास्त्रनिष्णातानां, शास्त्रार्थवाद-विवाद-ताण्डवे प्रकाण्डपण्डितानां, विबुधमण्डनानां, "पुँछ" राज्ये भूतपूर्वराजपण्डितानां, जम्मूस्थश्रीरघुनाथसंस्कृतमहाविद्यालये भूतपूर्वप्राध्यापकानां, सौम्यमनसां, समस्तान्तेवासिस्नेहिनां, लेखनशोधनसंभाषणप्रवीणानां, साहित्यसंगीतकलाकुशलानां, वयसा स्थविराणामपि, मनसा नवीनानां, मत्या धीराणां, प्रकृत्या वीराणां, आकृत्या च गम्भीराणां, तत्रभवतां श्रीमतां गुरुवराणां, विश्वनाथशास्त्रिणां, वरदकरकमलेषु सादरं सश्रद्धं च समर्प्यते मया इयं स्वल्पाक्षरा कृतिः। यतो हि :—

अदोषं केवलं ब्रह्म सदोषाश्च चराऽचराः।
तथाऽप्यस्तीह लोकेषु येषां केषां कुभावना ॥१॥

कृतिखण्डनकाण्डेषु बहवोऽकाण्डपण्डिताः।
परं तन्मण्डने दक्षो विश्वनाथो महामतिः ॥२॥

रामकृष्ण शास्त्री

श्रीरघुनाथपुरा, जम्मू (तवी)

१०–४–६५

# भूमिका

जम्बू पुरान्तर्गतश्रीरघुनाथमन्दिरस्थसंस्कृतमहापुस्तकालयाध्यक्षैः श्रीरामकृष्णशास्त्रिभिः सम्पादितं कादम्बरीकथासारभूतं चारुचूर्णिकामयं पुस्तकं मयाऽवलोकितम् । कादम्बर्याः जटिलगद्यशैलीनिविडकान्तारान्तराले प्रवेशमलभमानानां सुकुमारमतीनां छात्राणां सौकर्याय सुखावबोधाय चास्य विदुषोऽयं प्रयासः सुतरां प्रशस्यः। मन्ये यदेतत्पुस्तकपरिशीलनेन कविवरबाणभट्टकृतेरन्यथा क्लिष्टावबोधमपि कथावस्तु अल्पपरिश्रमेणैव परीक्षोत्तितीर्षूणां विद्यार्थिनां सुगमं मेधावैशद्यकारणं च भविष्यति। अस्मिन् पुस्तके कादम्बरीगद्यमयमहाकाव्यस्य सानुक्रमणिकं स्फुटशीर्षकसरलकथाखण्डेषु विभाजनं निरतिशयं रोचकमुपकारकं नैसर्गिकं च प्रतीयते। किम्बहुना, सुधियोऽस्याः पुस्तिकायाः समालोचनात्मकपरीक्षणेन छात्रेभ्यस्तदुपकारितामुपादेयतां च स्वयमेवानुभविष्यन्ति।

ऋषिभवन
चौगान फत्तू, जम्मू (तवी)।
५-३-६५

केदारनाथ शास्त्री

# ❀ स्पष्टोक्तिः ❀

कादम्बरी हि महाकवेर्बाणभट्टस्य विश्वविश्रुता अमरकलाकृतिरस्ति। संस्कृतसाहित्येतिहासे तु "गद्यं कवीनां निकषं वदन्ति, बाणोच्छिष्टं जगत्सर्वम्" इत्यादीनि बहूनि आभाणकानि संश्रूयन्ते। सत्यमेवैतत्सर्वमिति संविजानन्ति सहृदयाः साहित्यस्रष्टारो निपुणाः समालोचकाश्च।

कादम्बरीपठनावसरे तदन्तर्भूतमूलकथायां महान् संभ्रम इव संजायते। यतो हि तस्याः विभिन्नस्थलेषु संक्लिष्टसमाससंकुलम्, अलङ्कारबहुलं, सुदीर्घवृत्तवर्णनं हि महतामपि मतिं संभ्रामयति।

विशेषतस्तु परीक्षार्थिनो विद्यार्थिनः तत्कृते भृशं मुह्यन्ति, इति मेऽस्ति स्वानुभवः। परीक्षासु च यदा तत्खण्डांशव्याख्या सह एव, अपरांशेषु संप्रगुप्तं पात्रचरित्रचित्रणं, केषामपि पात्राणां मिथो भाषणं विशिष्टदृश्यवर्णनम्, इत्यादिविषयेषु प्रश्नाः समायान्ति तदा नूनमेवानेके परीक्षादित्सवोऽन्तेवासिनो मूलकथानभिज्ञताहेतुना तत्समाधानेऽशक्ताः संजायन्ते।

विद्यार्थिदशायां स्वयमनुभूतकष्टं स्मृत्वा सामयिकपरीक्षार्थिनाञ्चात्मसमं दुःखं दृष्ट्वा, मया यथामति तन्निरासाय कृतोऽयं प्रयासो यत् कादम्बरीकथासाररूपेण इयं परीक्षोपयोगिनी मूलकथाप्रबोधिनी सरला स्वल्पाक्षरा च कृतिः संपादिता। एषा च मदीया कृतिः कीदृशी, उपयुक्ताऽनुपयुक्ता वेति निर्मत्सरा अध्येतारोऽध्यापका एव संविजानीयुः, किमहम्?

ममास्मिरन् कृतिसंपादने यैः सहायकैः समर्थकैश्च सुहृद्भिः, संस्कृतहिन्दीग्रन्थैश्च साहाय्यं संविहितं, तेभ्यः सत्परामर्शदातृभ्यो ग्रन्थनिर्मातृभ्यश्चाहं कृतज्ञतापूर्वमनेकान् धन्यवादान् संवितरामि।

विविधग्रन्थप्रणेतृभिरनुसन्धानप्रवीणैः श्रीकेदारनाथ-शास्त्रिभिरस्याः भूमिकां लिखित्वा तु अहं सङ्क्रीत एवाऽस्मि। तत्कैः शब्दैः पुनस्तान् पुरस्कृतान् प्रकुर्याम्? अन्ते चाहं पाठकेभ्यः सादरं विनिवेदयामि यदत्रत्याः याः का अपि त्रुटयोऽवश्यं संसूचनीया इति।

रामकृष्ण शास्त्री

श्री रघुनाथपुरा, जम्मू (तवी)
१०-४-६५

# अनुक्रमणिका

# कादम्बरी

(संक्षिप्तकथा)

## १:— कथामुखम्

आसीत् सकलभूतलतिलकः, सामयिकनीतिनिपुणः, समस्तप्रजाभिनन्दितचरितः, विदिशाभिधानायां राजधान्यां शूद्रको नाम राजा। एकदा कुमारपालितप्रधानाऽमात्यादिपरिगतं सभासीनं राजानं प्रतीहारी समुपेत्य प्रणतिपुरः सरमब्रवीत्, "महाराज! दिव्यरमणीयाकृतिः काचित् चाण्डालकन्या आश्चर्यभूतं शुकविहङ्गममादाय देवदर्शनार्थमागता।" इत्याकर्ण्य राजा 'आनीयतामित्यादिशत्।' ततःप्रतीहार्याऽऽनीयमाना गृहीतान्तर्गतशुकपञ्जरेण चाण्डालबालकेनानुगम्यमाना मातङ्गकुमारी समागत्य राजानंप्रणम्योपविष्टा। पुरुषस्तु, महाराज! भुवनरत्नं सकलागमपारङ्गतं वैशम्पायननामानं शुकविहङ्गममादायास्मत्स्वामिदुहिता देवपादसान्निध्यमुपागता, तदयं विहङ्गमः स्वीक्रियताम्" इत्यवदत्। अथ राजा 'विश्रम्यतामिति' चाण्डालकन्यामभिधाय विसर्जितसर्वसभ्यः शुकेनसहाभ्यन्तरं प्राविशत्।

निवर्तितस्नानपूजाहारः मुहूर्तं विश्रम्य पुनः परिषन्मण्डलमास्थाय कृताहारं वैशम्पायनमवादीत्" विस्मापनीयमात्मोदन्तमावेदयतु भवान्।" स च स्वीयकथामारब्धवान्।

अस्ति भारतेऽस्मिन् "अवन्ती" नाम महान् प्रदेशः। अस्य प्रमुखं नगरं "उज्जयिनी" नाम्ना सुविख्यातम्। अत्र "क्षिप्रा" नदीतीरे श्रीमच्छङ्करभगवतो विशालो देवालयो वर्तते। यद्राज्यस्येदानीं कथा प्रस्तूयते, आसीत् तत्प्रदेशशासकस्य राज्ञो नाम "तारापीड" इति। अयं राजा स्वबुद्धिबलेन सम्यग् राज्यशासनं करोति स्म। स्वजन्मकुण्डल्यामवस्थितशुभोच्चग्रहदशावशादयं नृपः "लक्ष्मी-सरस्वत्यो" रविरोधेनानुकूलतां संलेभे। अथ च "शुकनास" नामकोऽमात्योऽप्यस्य सर्वगुणसंपन्नोऽद्वितीयो विद्वान् ब्राह्मणः साहाय्येऽतिष्ठत्।

## २:— सचिववैशिष्ट्यम्

बाल्यसख्यप्रभावेणायं राजा स्वममात्यं बहुमन्यमानः सर्वासु राज्यव्यवस्थासु तदनुमतिं सुविश्वस्तां स्वीकरोति स्म। सत्ये हरिश्चन्द्रः, धर्मे युधिष्ठिरः, पराक्रमे भीमः,सेवायां हनुमान्, नीतौ बृहस्पतिः, एवं विधोऽसौ मन्त्री "शुकनास" आसीद्, येन तदुपरि सर्वं स्वराज्यभारं संस्थाप्य राजा तारापीडो यथेष्टं जीवनसुखं समन्वभवत्। शुकनासस्यापि च प्रशासनचातुर्येण सर्वा प्रजा यथेष्टां संतुष्टिं समवाप।

## ३:— विलासवतीविचेष्टितम्

एवं खलु सर्वसुखोपेतोऽपि राजा तारापीडः संततिमन्तरा सुदारुणामन्तर्वेदनामनुभवतिस्म । एकदा तन्महिषी सौन्दर्य-प्रतिमा राज्ञी विलासवती स्वान्तः पुरेऽनेनैव शोकानलेन भृशं संतप्यमाना अश्रूणि विमुञ्चन्ती समासीना आसीत् । तदानीमेव तारापीडस्तामुपेत्य तस्यास्तादृशीं दशां च दृष्ट्वाऽऽश्चर्या-न्वितोऽभवत् । विलासवती तु सहसा स्वंपतिमागतं विलोक्य स्वामवस्थां यथाकथञ्चित् प्रच्छाद्य तदभिवादनार्थं समुदतिष्ठत् । यथोचितमासनादिकं च प्रदाय स्वयमपि तत्सविधे समुपाविशत् ।

## ४:— तदन्तर्वेदनापरिज्ञानम्

तदा पतिपार्श्वेऽवस्थितायास्तस्याः हृदयं पूर्वतोऽप्यधिकं मुच्छलितम् । सा च पुनः स्त्रीस्वभावकातरा भृशं रोदितवती । मालोक्य राजा अपि शोकातुरो भूत्वा स्वकराभ्यां तदश्रूणि ामृज्यापृच्छत् । "प्रियतमे ! किं कारणमत्रवर्तते, येन मित्थं संपरितपसि । शीघ्रं सत्यं सत्यं मे तत्सर्वंसंप्रति-दय । यतोऽहं त्वामेवं व्याकुलां द्रष्टुं न प्रभवामि । विदीर्यते हृदयम् ।" तेनैवं संपृष्टाऽपि सा मुखेन किमपि नावदत् । लं लोचनवारिप्रवाहमेव विससर्ज । तदा एका दासी ञ्जलिः सर्वं तस्मै निवेदयामास । "महाराज ! न भवते पता अत्रभवती महाराज्ञी । नचापरस्मै कस्मैचित् ।

महाभागायाः विलापहेतुरयमस्ति यदद्यार्चां विधाय भगवतो महाकालस्य मन्दिरं गता महाराज्ञी। तत्र च निःसन्ततीनां दुर्गतिप्रदर्शकं महाभारतीयं कथाप्रसंगं श्रुत्वा. गृहमागत्यैतादृशीमवस्थां संप्राप्ता। न भुंक्ते, न पिबति, नहि कथमपि शान्तिमाप्नोति। तदधुना देव एवात्र समयोचितं प्रतीकारं समुपकल्पताम्।"

## ५ः —राज्ञा तत्समाधानम्

दासीमुखादेवं समाकर्ण्य राजा राज्ञ्याः क्लेशकारणं परिज्ञाय क्षणं तूष्णीमास। ततस्तदभिमुखोऽवदत्, "प्रियतमे ! इह लोके नहि कश्चिदपि परमेश्वर-कार्येषु हस्तक्षेपं कर्तुं क्षमः। त्वमेव तावत् पर्यालोच्य कथय यदस्माभिरद्यावधि किमेतादृशं पुण्यं समुपार्जितं, येन वयं संततिसुखं समनुभवितुं शक्नुमः। तदिदानीं शोकमपहाय मनोवाक्कायकर्मभिर्देवानां साधुजनानां च सेवायां तत्परा भव। महतां खलु आशीर्भिः सम्भवेदस्माकं सन्तानमुखावलोकनाभिलाषः सफलः। पुराणेषु बहुधा एवं किल संश्रूयते। बृहद्रथो हि देवप्रसादेन जरासन्धं वीरवरं सुतमवाप। दशरथः ऋष्यश्रृङ्गस्यानुग्रहेण राम-लक्ष्मण-भरत-शत्रुघ्नान् चतुरः पुत्रान् संलेभे।" एवं हि राज्ञीं समाश्वास्य शान्तो नृपः स्वयं बहिराजगाम।

## ६ः— तस्या व्रतानुष्ठानम्

संप्रस्थिते पत्यौ राज्ञी समुत्थाय स्नानादिकं विधाय दैनिकार्चां च परिसमाप्य किञ्चिदभुंक्त। तत एव सा स्वाम्याज्ञानुसारं स्व-

कार्यक्रमं परिकल्पयामास । प्रत्यहं सा ब्राह्मवेलायां प्रबुध्य स्नानादिकं कृत्वा देवाराधनं प्रारब्धवती । विशेषतस्तु "चण्डिका-देव्याः पूजने तत्पराऽभवत् । पुष्प-धूप-दीप-नैवेद्यविशेषैर्देवीं समभ्यर्च्य सा रात्रौ तत्स्थाने एव शयनं करोति स्म । पुत्राप्ति-हेतोर्यः कश्चिद् यां कामपि रीतिं तस्यै वदति, सा क्लेशमनुभूयापि तथैव समाचरति स्म । प्रसुप्ता च यादृशं स्वप्नं पश्यति, प्रातः पतिव्रताभ्यः सद्गृहिणीभ्योऽनुनयपुरः सरं तत्कृते शुभाशुभं फलं संपृच्छति स्म ।

## ७:— स्वप्नफलनिर्धारणम्

एवं क्रमानुसारेण एकदा राजा स्वप्नमपश्यद्, यद् विलासवती शय्यागृहे शयाना आस्ते । "चन्द्र" स्तन्मुखे संप्रविशति । दृष्ट्वैतद् नृपो निद्रातोऽवबुद्धो मन्त्रिणं समाहूय स्वप्नफलं पर्यपृच्छत् । तेनोक्तम्, "महाराज ! ममैतत् संप्रतिभाति यद् वयं शीघ्रमेव युवराजस्य चन्द्र-वदनं संद्रक्ष्यामः । भवतेव मयापि स्वप्नो दृष्टो यत् कश्चिद् रूपशीलयुक्तो विप्रो मनोरमाया उपरि प्रफुल्लं कमलकुसुमं संप्रक्षिपति । शास्त्रानुसारं सत्यमेतद् यत् सुकर्मकृते सुस्वप्ना एव सुजनैः संदृश्यन्ते । सविश्वासमहं विनिवेदयामि यत् सत्वरमेव महाराज्ञी गर्भं धृत्वा चन्द्रोपमं कीर्त्तिमन्तं कमलोपमं च मनोरमं कुमारं जनयिष्यति" इति ।

## ८:— राजकुमारप्रजननम्

अमात्यवार्तामाकर्ण्य प्रसन्नमुखस्तारापीडस्तत्सहित एवान्तःपुरे

समागत्य राज्ञीं सर्वं सुस्वप्नफलं समश्रावयत् । तच्छ्रुत्वा तु साऽपि प्रफुल्ल-हृत्कमलाऽभवत् । कतिपयेषु एव दिनेषु सा गर्भवती संजाता । राजा अपि तल्लक्षणानि ज्ञात्वा भृशममोदत । क्रमेण हि प्रसवकालः समागतः । एकस्मिन्नहनि सचिवसहितः समुपविष्टो हि तारापीडोविज्ञप्तिमवाप, यदद्य कुमारो जातः । श्रुत्वैव राजा मन्त्रिसहायोऽन्तःपुरे समुपस्थितः । द्वारमार्गेषु मङ्गलकार्याणि समालोक्य नृपोऽपूर्वानन्द-निमग्नोऽभवत् । प्रसूतिगृहमुपेत्य हस्तौ पादौ च संप्रक्षाल्य यथा प्रथानुसारं "अग्निदेवं" स्पृष्ट्वा राजाऽऽभ्यन्तरे प्राविशत् । तदैव च मदनमानर्दनं सुमनोहरं कुमारं दृष्ट्वाऽसौ अपारानन्दसिन्धौ सन्निमग्नः संजातः ।

## ९:— तल्लक्षणविचिन्तनम्

तदा मन्त्री राजकुमारं समालोक्य संपरीक्ष्य च राजानं प्राह, "देव ! युवराजोऽयमस्माकं चक्रवर्ती सम्राट् भविष्यति । मया सर्वाण्यपि तदुचितानि सुलक्षणानि अत्र नख-शिखपर्यन्तं पर्यालोचितानि । तारापीडस्तु तदाकर्ण्य प्रमुदितस्तदानीमेव दानादिपुण्यकर्मसु संप्रवृत्तः । तस्मिन् काले तत्र धनिकाऽभ्यर्थिऽनो-रन्तरालेऽन्तरो नानुमीयते स्म ।

## १०:— सचिवसुतसंजननम्

मन्त्रिणा शुकनासेन सह राजा तारापीडः पुत्रोत्सवे तथा तन्मयोऽभवद् यथा नान्यविषयेषु तस्य कापि परिचितिः स्यात् ।

तदानीमेव कश्चित्सेवकस्तत्रागत्य संसूचयामास, यन्मनोरमा-देव्याः पुत्रप्रसवः संजातः।" एतदाकर्ण्य राजा हर्षभरितमानसोऽवदत्, "सत्यं खलु लक्ष्मीः धनिकस्य, शनैश्चरश्च निर्धनस्यैव कण्ठमाक्रामति।" संवादकं तं पुरस्कृत्य विससर्ज। अनन्तरं स्वयं सहचरसहायो मन्त्रिणो गृहे गतः। तत्रापि च तथैव मङ्गलसमारम्भः समारब्धः।

## ११:— कुमारयोर्नामकरणम्

एवं तत्र आनन्दमहोत्सवे नवदिनानि विगतानि। तदा दशमेऽहनि राजा महापण्डितान् ज्योतिर्विदः समाहूय लग्नविचारे संलग्नः। शुभघटिकामालोच्य गो-धन-दान पुरःसरं युवराजस्य संज्ञासंस्कारमकरोत्। स्वप्ने चन्द्रं मुख्यं मत्वा तेन स्वपुत्रस्य नाम "चन्द्रापीड" इति कृतम्। मन्त्रिणाऽपि स्वप्नफलानुसारं स्वसुतस्य "वैशम्पायन" इति नाम निर्णीतम्। तदनन्तरं राजा मन्त्री च यथाकालं तयोरपरान् संस्कारविशेषान् अपि समकुरुताम्।

## १२:— तयोः सच्छिक्षणम्

समुचितकर्मनिवृत्तौ राजा अचिन्तयद्, यथाहि अनयोरमूल्यः कालो वृथा न गच्छेत्, तथा मया परिकल्पनीयम्।" सुविचार्य चासौ क्षिप्रा-तीरस्थ-मन्दिरस्यान्तिके एकां हयशालामपरां च पाठशालां संस्थापयामास। कुमारयोः स्वास्थ्यसंरक्षणार्थं च शारीरिक-व्यायाम शालामपि प्रास्थापयत्। स्वास्थ्यविशेषज्ञोऽपि

तत्र कश्चित् सन्नियुक्तः । शुभे मुहूर्ते कुमारौ तत्र गुरुजनसंरक्षणे संप्रेषितौ ।

## १३:— द्वयोर्विद्याभ्यसनम्

गुरुजनैश्चन्द्रापीडस्य वैशम्पायनस्य च मतिपरीक्षणं कृत्वा सोत्साहं तौ संपाठितौ । राजकुमारो मन्त्रिकुमारश्च सुप्रयत्नेन शिक्षायां चेतो दत्त्वा यथाकालं सर्वविद्यासु सुदक्षतामलभताम् । अमात्यसुतापेक्षया राजपुत्रस्य शरसन्धानयोग्यता विशिष्टा एव आसीत् । चन्द्रापीडो बाणमारणेन क्षणमात्रिके काले एव गगन-विहारिणो विहङ्गमगणान् धराशायिनो विधातुं प्रभुरासीत् ।

## १४:— गुरुकुलविसर्जनम्

यदा द्वावेव तौ विद्यावन्तौ संजातौ, तदा गुरुजनादेशानुसारं तारापीडो नवयुवकौ तौ गृहमानेतुं सेनापतिं गण्यमान्यनागरिकांश्च तत्राप्रेषयत् । गृहागमनवृत्तमाकर्ण्य कुमारौ जुरुजनेभ्योऽनुज्ञामादाय शुभाशिषश्च संगृह्य समागतपौरजनान् मिलितुं विद्यापीठस्य बहिर्द्वारे समागतौ । दृष्टवा च तेषामुचितसमादरकार्यं कृतवन्तौ । अनन्तरं द्वावपि तौ अश्वारोहिणौ भूत्वा जनैरनुगम्यमानौ राजभवनं संप्रस्थितौ ।

## १५:— तयोः स्वागतम्

कुमारयोरागमनवार्तामाकर्ण्य सर्वेऽपि पौरजनास्तद्दर्शनार्थं

मार्गेषु, गृहद्वारेषु, अट्टालिकासु च सोत्सुकाः समतिष्ठन् । क्षणमेव तौ प्रजावर्गस्यान्तस्तलं संस्पृशन्तौ राजभवनं प्रत्यागतौ। आबालवृद्धास्तन्मुखचन्द्रदर्शनेन संतृप्तान्तः करणाः परमां प्रीतिमादाय स्वेषु स्वेषु व्यापारेषु संलग्ना अभूवन् ।

## १६:— भवनसंप्रवेशनम्

राजभवनद्वारे तयोरुपरि स्वागतकर्तृभिः पुष्पवृष्टिः कृता। तत्र तौ हयाभ्यामवतीर्य पद्भ्यां प्रचलितौ। तदानीं तयोरीदृशी शोभा आसीत्, यथा हि अयोध्यायां रामलक्ष्मणौ आस्ताम्। पथप्रदर्शकैःसह भवनं प्रविश्य शस्त्रागार-पशुशालाप्रभृतीनां दर्शनं कुर्वन्तौ तौ षट् खण्डान्नुल्लङ्घ्य सप्तमे खण्डे संप्रविष्टौ।

## १७:—बन्धुजनसंदर्शनम्

सप्तमोऽयं भवनभागोऽन्तः पुरे शयनागारस्थानीयः। तारापीडस्तत्रैव तौ प्रगाढं समाश्लिष्य समाहृतवान्। तावपि च तमभिवादनपूर्वकं समालिङ्ग्य आभ्यन्तरे गत्वा मातरमन्याश्च पूजार्हाः स्त्रीः प्रणम्य तदाशिषोऽगृह्णीताम्। महाराज्ञ्या द्वावपि तौ सस्नेहमालोक्य मुखचुम्बनप्रेम्णा स्नेहाश्रूणि विमुञ्चन्त्या सम्मानितौ। सर्वेश्वराय चानन्तान् धन्यवादान् सा समर्पयत्।

## १८:— मन्त्रिगृहगमनागमनम्

अत्र सर्वेष्टजनान् सुखिनोविधाय द्वावपि तौ मन्त्रिणः शुकनासस्य गृहं संप्रस्थितौ। तत्र च शुकनासेन मनोरमासहायेन

तयोः स्वागतंकृतम्। एवं सर्वजनैरत्यानन्देन सम्मानितश्चन्द्रापीडः स्वभवनं प्रत्याययौ। स्नानार्चनभोजनादिकमनुष्ठाय चासौ विश्रामागारेऽगच्छत्। सायं पुनः पित्रोरन्तिके समागत्य मधुरालापैरनेकविषयेषु वार्त्तामकरोत्। रात्रौ च भुक्त्वा शयनागारे ससुखमस्वपत्।

## १९:— मृगयावने प्रधावनम्

द्वितीयेऽहनि राजकुमारो नित्यविधिं परिसमाप्य मृगयार्थं वनमगच्छत्। तत्र प्रचलन्नसौ महति कानने संप्रविष्टः। सघनतरुबाहुल्येन तत्र दिनमपि रजनीसदृशं संजातम्। बहवोहिंस्राः पशवस्तत्रासन्। स्वपरिचारकैः सह तत्रासौ मृगयामकरोत्। इतस्ततः परिभ्रम्य तेन बहवो बृहत्कायाः पशवो निहताः। मध्यान्हवेलायामसौ तदश्वश्च "इन्द्रायुधः" श्रमेण क्लिन्नौ अभवताम्। तदा सहचरैः साकं सायं गृहमागत्य भोजनादिकं कृत्वा विश्राममकरोत्।

## २०:— पत्रलेखासम्मिलनम्

सुख-निद्रां समाप्य प्रातरुत्थाय नित्यकर्मसमाप्त्यनन्तरंहि चन्द्रापीडः स्वागतभवने समायातः। तदानीमेव काचिद् दासी एकां तरुणीमादाय तत्रोपस्थिता। राजकुमारमभिवाद्य सा प्राह, "प्रिययुवराज! महाराज्ञ्या समादिष्टं यद् भवान् इमां सुन्दरीं स्वान्तिके अवस्थापयतु। नेयं दासी, परं भवता इयं सुमुखी स्वसंगिनीस्थाने संस्मरणीया। इयं हि सुकुमारी "कलूत" देश

नरेशस्य कन्या "पत्रलेखा" वर्तते। पराजितेन तेन इयं महाराजाय तारापीडाय समर्पिता। महाराज्ञी चेमां बहुमन्यमाना अस्यै परं स्निह्यति। इयं बहुगुणवतीविद्यते। अस्याः गुणगौरवं भवान् स्वयमेव सहचरो भूत्वा संपरिज्ञास्यति।"

## २१:— प्रेमसम्वर्धनम्

दासीमुखादेवं सर्वमवधार्य राजकुमारेण मातुराज्ञा शिरसि धृता। राजकुमारीं पत्रलेखां स्वसमीपेसंरक्षितुं स्वीकृतम्। सा च गुणगौरवेण तं सद्य एव संप्रसादितवती। सोऽपि प्रेमदृष्ट्या तां प्रसादयितुं संप्रवृत्तः।

## २२:— तारापीडविचिन्तनम्

एवं गच्छति काले एकदा तारापीडः स्वंकुमारं स्वराज्यपदे नियोक्तुमचिन्तयत्। तन्निमित्तं तेन महाराज्ञी, मन्त्री, सभासदश्च सर्वेऽपि सम्मतिदानार्थं संपृष्टाः। सर्वैरेव तैः सम्भूय राज्ञःसमर्थनं कृतम्। प्रजाजना अपि तच्छ्रुत्वा हर्षभरितमानसा अभूवन्। तत्सज्जार्थं च तैर्नगरस्यतोरणपताकादिभिर्विशिष्टा शोभा संपादिता। तदानीं तत्रापरोदेवलोक इव सुनिर्मितोऽवलक्ष्यस्तेम।

## २३:— अमात्योपशिक्षणम्

राजतिलकात्पूर्वमेवैकस्मिन् दिने केनापि हेतुना मन्त्रिभवनं गतः राजकुमारः। शुकनासस्तु समयमवधार्य तस्मै सस्नेहं काम-

क्रोधलोभमोहमदमात्सर्याणां, लक्ष्म्याश्च गुणावगुणौ, सज्जनदुर्जनयोश्च लक्षणादिकं सर्वं समुपादिशत्। राजकुमारोऽपि सर्वंशिक्षापाठं सम्यगवधार्य प्रश्नोत्तरपूर्वकं नानाशङ्कास्पदानां विषयाणां समाधानमलभत। राजमन्त्रिणः सदुपदेशं हृदि संस्थाप्यासौ राजभवनं प्रत्यागच्छत्।

## २४:— राजतिलकादानम्

राजतिलकस्य समस्तसाधनसामग्र्यां समुपस्थितायां तारापीडः पण्डितान् दैवज्ञाँश्च समाहूय शुभलग्नपरीक्षणं कारयित्वा महता समारोहेण चन्द्रापीडाय राजतिलकं प्राददात्। सोऽपि राजसिंहासनमारुह्य सर्वप्रकारेण प्रजाजनहिताहितं परिचिन्त्य राजकार्यं प्राचालयत्। सर्वा प्रजा तस्य सद्भावैः समाकृष्टहृदया न्यायमार्गे संप्रवृत्ता आसीत्।

## २५:— दिग्विजयप्रस्थानम्

सुप्रशासनं कुर्वता तेन दिग्विजयार्थं मनसि विचिन्तितम्! तदभिलाषसंपूर्त्तये प्रजाजनैः, सेनानायकैः, मन्त्रिमहोदयैश्च स्वसम्मतिः संप्रदर्शिता। ततोऽसौ स्वीयां वीरबहुलां चमूमादाय राजनगराद् बहिर्निर्जगाम।

## २६:— सुवर्णपुरनिग्रहणम्

स्वनगराद् बहिरागत्य यत्राप्यसौ गतस्तत्रैव स्वपितुः साम्राज्यं समपश्यत्। पितुर्बलमाहात्म्यं दृष्ट्वा चन्द्रापीडो वैशम्पायनश्च-

आश्चर्यमग्नौ अभूताम्। पथि यत्र तत्र सेनां विश्राम्य तेन चतुर्दिक्षु भ्रमणंकृतम्। अन्ते च "सुवर्णपुर" नामानं नगरं विजित्य चन्द्रापीडः स्वाधीनमकरोत्।

## २७:— किन्नरानुगमनम्

एकदा तद्राज्यस्यैकस्मिन् वने मृगयायैगतश्चन्द्रापीडो वनमध्ये परिभ्रमन् कुत्रचित् किन्नरदम्पतीअपश्यत्। सुन्दरकिन्नरयुगलं प्रसमीक्ष्यासौ साश्चर्यं तं बलेनप्रग्रहीतुं स्वमश्वं पर्यधावयत्। किन्नरदम्पती तु तदा अकस्मादापतितां-विपदिमालोच्य वेगेन पलायितौ। चन्द्रापीडः पुनरतिवेगेनानुधवन् "इमौगृहीतौ, इमौगृहीतौ" इति प्रतिक्षणं मन्यमानोऽपि किन्नरदम्पती नैव परिग्रहीतुमशक्नोत्। परिधावन्तौ किन्नरदम्पती एकं गिरिशिखरमारोहताम्। विवशोभूत्वा चन्द्रा-पीडस्तदेकदृष्ट्यासमालोकयन्नधएवावस्थितः।

## २८:— तद्ग्रहणेऽसामर्थ्यम्

किन्नरदम्पत्योः दृगगोचरसंजातयोः चद्रापीड़ः स्वकीयां दशामस्मरत्। चिन्ताकुलश्चाजानद् यदहं स्वसेनातोऽति-दूरेऽत्रनिर्जने वने संपतितोऽस्मि। कथमधुना स्वसैन्ये सम्मिलितः स्यामिति विचिन्तयन् स्वमूर्खतायां शोकमपि संप्राकाशयद् यन्मया अकारणमेव किन्नरदम्पतीग्रहणे व्यापारो विहितः। कस्मैचित् कष्टं दत्त्वा नाहं सुखमनुभविष्यामीति पर्यालोचितवान्।

## २९:— अच्छोदसरोऽनुगमनम्

एवं गम्भीरविचारानन्तरं चन्द्रापीडो मनः समाधाय दिग्ज्ञानं च लब्ध्वा दक्षिणाशायां संप्रस्थितः। परिचलन्नसौपथिश्रमाकुलोभूत्वा एकस्य सघनछायावतस्तरोरधः समुपविष्टः। स्वल्पं तत्रोषित्वा पिपासासंपीडितो जलमन्वेष्टुमितस्ततोदृष्टिमचालयत्। सुचिरं पर्यटता तेन जत्र गजपदचिन्हानि संलक्षितानि। तदनुमानेनावश्यमत्र कुत्रचिद् जलाशयो भविष्यतीति मत्त्वाऽसौ अग्रेऽगच्छत्। कियद्दूरे एव "अच्छोद" सरस्तीरे समायातः। तत्रत्यं प्राकृतिकं सौन्दर्यं दृष्ट्वाऽसौ संसक्तहृदयस्तत्रैवातिष्ठत्। शीतलवायुप्रभावेणापाकृष्टघर्मो घोटकमेकतरौ बद्ध्वा सरसि संप्रविश्य स्नान-पानमृणालाशनप्रकारेण क्षुधाग्निं शमित्वा शान्तिंमन्यमानः एकस्यां शिलायामस्वपत्।

## ३०:— वीणाध्वनिसंश्रवणम्

तत्र विश्रम्यमानेन तेन कुतश्चिन्न मधुरतमो वीणारवः संश्रुतः। वीणानादेनचाकृष्टोऽश्वः "इन्द्रायुधोऽपि" तृणभक्षणातो विरम्य तच्छ्रवणेनिमग्नोऽभवत्। चन्द्रापीडस्तु रसभरितहृदयः समुत्थाय, वीणाशब्दानुसारिणीमाशामेवाभिमुखीकृत्य, कियदग्रे गत्त्वा, अदृष्ट्वा च कामपि आकृतिं पुनः प्रत्यावर्त्य, हयमारुह्य, तामेव ध्वनितदिशमनुसृत्य, संप्रचलितः।

## ३१:— शिवालये सुन्दरीसंदर्शनम्

स्वल्पमेव पन्थानमतिक्रम्यासौ रमणीकमेकं स्थानम-

पश्यत् । तन्नाम "चन्द्रप्रभा" इत्यासीत् । तत्र तेन श्रीमच्छङ्कर-भगवतो देवालयोऽवलोकितः । आभ्यन्तरे गत्वा शिवाराधन-तत्परां वीणापाणिमेकां रमणीयां कन्यामालोक्य चन्द्रापीडोऽपि प्रह्वीभूय शिवमनमत् । अनन्तरं रूपवतीं तां बालां निर्निमेष-चक्षुर्भ्यां संपश्यन् मनस्यधारयद् यन्नेयं मानुषी, परं कापि देवकन्या एवास्ति । केनापि हेतुना शिवंभजते । यदि चेयं पूर्वालोकितकिन्नरदम्पतीवद् भयाकुला पलायनपरा न स्यात्तर्हि नूनमस्याः परिचयं संप्रक्ष्यामि । एवमवधार्य निश्चल एव तत्पूजावसानं कालमाकलयन् तत्रैव संस्थितः ।

## ३२:— तदाश्रमेऽनुगमनम्

अर्चनानन्तरं सा सुन्दरी भगवन्तमाशुतोषं प्रणम्य, समुत्थाय च राजानं (चन्द्रापीडं) तत्रोपस्थितं समालोक्य शिष्टाचारपुरः सरं स्वाश्रमे नेतुं मधुरया गिरा समाम-न्त्रयत् । सोऽपि तदाचारविश्वस्तस्तया सह संप्रस्थितः । कियदन्तरे एवैकस्यां गिरिगुहायामभितस्तरुलताभिरुद्भासितायां तन्निवास आसीत् । तत्र गत्वा चन्द्रापीडस्तपस्विन्याः समस्तसम्भारार्हाणि समुपकरणानि समालोकितवान् ।

## ३३:— राज्ञः परिचयदानम्

तदा तया राज्ञेऽर्घ्योचितानि वस्तूनि समर्पितानि । तेन तु तद् दृष्ट्वोक्तम्, "देवि, अलंश्रमेण । अत्रभवत्या खलु सुधोप-मया गिरा एवाहं नितरां सत्कृतोऽस्मि ।" परं तदनुरोधे-

नासौ तद्द्रव्यादाने विवशोऽभूत् । अनन्तरं सा चन्द्रापीडश्च पृथक् पृथक् शिलाखण्डयोः समुपविष्टौ । तया पृष्टश्च सः आत्मकथां विवक्तुं संप्रवृत्तः ।

## ३४:— सुन्दरीपरिचयकथनम्

तद्वृत्तमाकर्ण्य सा ततः समुत्थाय, भिक्षापात्रमादाय, वने गत्वा, सफलतरूणामधः स्थित्वा, तेभ्योभिक्षामयाचत । तैस्तरुभिस्तदभिलाषमनुसरद्भिः सुमधुराणि फलानि तस्यै संप्रदत्तानि । फलपूर्णपात्रमादाय सा राज्ञोऽन्तिके समागत्य तस्मै भोक्तुं प्राददात् । चन्द्रापीडस्तु जडेषु वृक्षेषु चैतन्यव्यवहारमालोक्य विस्मितः सन् तानि फलानि भुक्त्वा क्षुधामशमयत् । तस्मिन् भुक्तवति साऽपि किञ्चिद् भुक्तवती । ततो विश्रम्य, सन्ध्यायां पुनरुत्थाय, पूजाप्रभृतिकर्म निष्पाद्य तत्रैव यथापूर्वं तौ समुपविष्टौ । तस्यास्तादृशं प्रेमान्वितमातिथ्यं हृदि प्रशंसमानश्चन्द्रापीडः सविश्वासं तत्परिचयप्राप्तौ प्रायतत । संप्राप्य च समयं संपृष्टवान्, "देवि ? अहं भवत्याः परिचयं, विजने वने चात्रैवमाराधनहेतुं जिज्ञासमानः संप्रार्थयामि । तत्कथयतु अत्रभवती आत्मकथाम् ।" तेनैवं पृष्टा सा प्रथमं तु मौनमास्थिता । ततश्च सबाष्पनयना संजाता । येनैतदनुमीयते स्म यत्सा केनापि सुदुःसहदुःखेन दुःखिताऽस्तीति । अनन्तरं मन्दं मन्दमवदत्, "भवान् मदीयां करुणकथामाकर्ण्य किं करिष्यति ?" परं तेन पुनः पुनः संप्रार्थिता सा कथयितुं संप्रवृत्ता ।

## ३५:— स्ववंशपरम्परावर्णनम्

सा प्रोवाच, "अहमेका देवदासी, देवलोकोमेवासगृहम्। अस्माकं द्वादशवंशाः सन्ति । अन्यच्च, राज्ञो "दत्तस्य" सुताभ्यां वंशद्वयमपरं समुत्पन्नम्। "चित्ररथस्य" जन्मदात्री "मुनिः"। "हंसस्य" चोत्पादयित्री "भरिष्ठा" अस्ति। देवराजेन "मुनिः" गन्धर्वलोकस्य प्रशासने नियुक्ता। तया च "हंसाय" स्वसाम्राज्यस्यैकं भागं प्रदायासौ तत्राधिकारे विनियुक्तः । इदं रमणीयंस्थानं, मनोहरं सरः, सुन्दरञ्चशिवमन्दिरं भवान् यत् पश्यति, तत्सर्वं "मुनि" संपादितमेवास्ति।

## ३६:— स्वनामकथनम्

"मुनि" सकाशात् समादरं प्राप्य "हंसोऽपि" स्वभार्यया गौर्या सह हेमकूटे न्यवसत् । अहं च मन्दभाग्या तयोरेव सुताऽस्मि महाश्वेता । मदतिरिक्तं न किमप्यपरमपत्यमासीन्मे पित्रोः।

## ३७:— स्वावस्थावर्णनम्

कौमारमतिक्रम्य यौवनमास्थिताहमेकदा वसन्ततौं मात्रा सह स्नातुमत्रैव "अच्छोद" सरस्तीरे समागता। सरोऽभितोलताकुञ्जेषु विहरन्त्या मया कापि अपूर्वामोदमयी कुसुममञ्जरी समाघ्राता । तामेवानुसरन्ती चाहमग्रे गत्वा कमपि रूपवन्तं मुनिपुत्रं स्वान्तेवासिना सह व्रजन्तमपश्यम् । तस्य

कर्णयोः पूर्वानुभूतसौरभं तत्कुसुमं च संशोभमानमवालोकयम् ।

## ३८:— मुनिपुत्रसाक्षात्करणम्

मुनिपुत्रस्यालौकिकं सौन्दर्यं दृट्वाऽहं मुग्धा भूत्वा कोटिशः प्रयतमाना अपि चेतस्तस्मान्न प्रत्यावर्त्तयम् । न जाने तत्सविधे कीदृशो मन्त्रविशेष आसीद्, येनाहं बलादाकृष्ट-हृदया प्रतिपलं तमेवान्वचिन्तयम् । कदाचिदयं मां शपेदित्यपि शङ्का मे संजाता । परं स्वमनोऽनुकूलं तदा मां प्रणमन्तीं स्नेहचक्षुर्भ्यां दृष्ट्वा सोऽपि मयि प्रेमभावं समदर्शयत् । एवमतर्कितस्नेहव्यापारमालोक्य मया तच्छिष्यः कपिञ्जलः सप्रणामं संपृष्टः, "महाभाग ? कृपया मां मुनि-पुत्रपरिचयं, लोकोत्तरसौरभान्वितपुष्पपरिचयं च संज्ञापय ।" मदीयां प्रश्नावलीं श्रुत्वा सोऽवदत्, "देवि ? एतद्वृत्त-संप्राप्तौ अपि न ते कोऽपि लाभो भविष्यति । यदि चास्त्येव तेसुदृढोऽभिलाषः, तत्सावधानतया चेतोदत्त्वा संश्रृणु ।"

## ३९:— मुनिपुत्रपरिचयादानम्

तदा सोत्सुकां मामालोक्य सः पुनरवदत्, "भद्रे ? अस्ति श्वेतकेतुर्नाम एको महामुनिः । एकदाऽसौ भगवन्त-मर्चयितुं कमलकुसुमप्राप्तये मन्दाकिनीतटे गतः । तत्र च तेन श्रीर्देवी दृष्टा । सा तु मुनिराजं समालोक्य तदनुरक्ता संजाता । ततस्तद्दर्शनादेव "पुण्डरीक" मुनेर्जन्माऽभूत् । सचायमेवास्ति, यं भवती प्रत्यक्षमत्र दृष्टवती । पुष्पेति-

वृत्तञ्चेदमस्ति, यत् क्षीरोदधिमथनावसरे यत्प्राप्तमासीत्, तदेवेदं कुसुमम् । अद्य हि आवां भगवन्तं शूलपाणिं समर्चयितुमगच्छावस्तदा नन्दनवनस्य मालाकारेणेदमस्मै समर्पितम् ।"

## ४०:— प्रेमाविर्भाववर्णनम्

एवं वदति कपिञ्जले मुनिपुत्रः पुण्डरीको मध्ये किमपि संविहस्य प्राह, "किं तेऽनेन कथाकलापेन प्रयोजनम् ? यदीच्छसि, तद् गृहाण स्वमेतत्कुसुमम् ।" इति संवदता तेन तत्पुष्पं मत्कर्णे शृङ्गारीकृतम् । मद्देहसंस्पर्शेन तु मुनिपुत्रः रोमाञ्चितो जातः । तस्य माला कराभ्यां विस्रस्ता । मया अन्तरा एव गृहीत्वा सा स्वकण्ठे संधारिता । तदानीमेव काचिद्दासी तत्रागत्य मामबोधयत्, "प्रचल, कुमारिके, त्वां जननी संप्रतीक्षते ।" तदाकर्ण्याहं पदाक्रान्ताभुजङ्गिनीव तां भृशमभर्त्सयम् । मयोक्तम्, "किंकुर्याम्, यदि हि प्रतीक्षते मां जननीति ।" तामेवमुक्त्वा मुनिपुत्रस्य च रुद्राक्षमालां कण्ठहारस्थाने संस्थाप्याहं तस्मै स्वकण्ठाभरणं समर्प्य तन्मनोरमां मूर्त्तिं च हृदि संस्थाप्य स्नातुं सरस्तीरे संप्रस्थिता ।

## ४१:— तयोर्वार्ताप्रकाशनम्

नातिदूरे गताऽहमेतदश्रृणवम्, यत् पुण्डरीकस्य तात्कालिकीमवस्थामाकलयन् तत्सहचरः कपिञ्जलस्तं प्रबोधयति,

"हे सखे ? कीदृशी ते दशा विचित्रा संजाता । अधुना तव शिक्षावाक्यानि क्व गतानि । शास्त्रज्ञानं कुत्र विलुप्तम् । त्वं हि रमणीवदनमवलोक्य एतादृशो विवेकशून्यस्तदासक्तश्च संजातः, यत् स्वां मालां, तस्याः कण्ठाभरणमपि च न विविच्य परिचिनोषि ।" तद्वचनं श्रुत्वा, स्वमालायाः स्थाने च मे कण्ठहारं दृष्ट्वा पुण्डरीकोऽपि संक्षुब्धो मां सम्बोधयन्नाह, "अयि युवति ? देहि मे मालां, नो चेदभिशप्ता भविष्यसि ।" ततस्तन्मालां तस्मै प्रत्यर्पयित्वा सरसि च स्नात्वा, मात्रा सहैवाहं स्वभवनं प्रत्यागच्छम् ।

## ४२:— स्वदशावर्णनम्

स्वभवने समागत्याहं यत्र तत्र सर्वत्र प्रतिपलं तं प्रियतममेव नयनाग्रेऽपश्यम् । उन्मादिनीव मे संज्ञाशून्यावस्थोपस्थिता । नित्यकर्मापि मे विस्मृतम् । स्वां दासीमाहूय मया संबोधितंयत् "कोऽपि ममाज्ञां विना मत्प्रासादे न समागच्छेत् ।" ततोऽहमट्टालिकामारुह्य प्रियतमसंगमस्थानमपश्यम् । तद्दर्शने चाहं तथा आत्मानं विनियोजितवती, यत् तरलिकां दासीमपि तत्रोपस्थितां नैवालक्षयम् ।

## ४३:— प्रेमपत्रिकादानम्

ततः सा स्वयमेव मां संबोध्याश्रावयत्, "कुमारिके ? सरस्तीरेऽवलोकितः स एव मुनिराजो मदभ्याशे प्रच्छन्नवेशोह्यागत्य भवतीं संपृच्छन् पत्रमेतद् भवतीकृते मह्यमदतात् ।"

मया च तत्पत्रमादाय सा पृष्टा, "तरलिके ? कुत्र त्वयाऽसौ संदृष्टः ? कीदृशी चास्ति तस्य वेशभूषा ? किमुक्तं हि तेन ?" परं सत्वरमेवाहं मौनमलभम् । संविचारितं हि मया यत् स्नेहिजनस्य वार्त्ताप्रकाशने न क्षेम स्यादिति । तदाहं तत्पत्रं संपठन्ती तत्रोपविष्टा । ततः समागता सन्ध्यावेला ।

## ४४:— पुनः कपिञ्जलसम्मिलनम्

तदानीमेका दासी समागत्य समसूचयत्, "कुमारिके ? सरोऽन्तिके यो मुनिराजोऽमिलत्, स एव स्वमालामादातुमत्रागतः ।" इदमाकर्ण्य मया सोक्ता, "त्वं सत्वरं तमाभ्यन्तरेऽत्र सादरं समानय ।" ततः कपिञ्जलः आसने समुपविश्य सदुःखं मेप्रियतमस्य विरहदशामवर्णयत् । तेनोक्तम्, "यदि शीघ्रमेव तन्मनोरथस्त्वया न प्रपूरितस्तर्हि कुपरिनाणामोऽवश्यं सम्भविष्यति ।" एवमनेकधा वार्त्तालापेषु क्रियमाणेषु समुपस्थिता रजनी। कपिञ्जलोऽपि मत्सकाशाद् गमनविधिं मत्वा, समुत्थाय च स्वसख्युः समीपेऽगच्छत्। मया संपृष्टा स्वसहचरी, कथं मे मनोरथः सफलः स्यादिति। विचारयन्त्येवाहमचेतनतामभजम्। न मया संलक्षितामातुरागमनवेला। तस्यां विनिर्गतायां पुनरुत्थिता मे विचारशक्तिः। प्रियतममिलनोपायमेवाहमन्विष्यन्ती तरलिकां पुनरपृच्छम्।

## ४५:— मिलनस्थानगमनम्

सर्वं सुविचार्य निशीथेऽहं तया सह प्रियतमान्तिके गन्तुं

मतिमकुर्वम्। तदानीमेव मम दक्षिणाद्‌क्ष्णाऽमङ्गलं संसूचितम्। अहमतिव्याकुला संजाता। तथापि तरलिकया सह सरस्तीरस्थवने गता एव। तदा तत्रतं प्राणवल्लभमनालोक्य सरस्तटेऽवस्थिता। संश्रुतश्च मया रोदनध्वनिः। तदाकर्ण्याहमाहतहृदया-तामेवध्वनिदिशमनुसरन्ती पर्यधावम्।

## ४६:— सदुःखसम्मूर्च्छनम्

निकटे गत्वा संदृष्टो मया परिरुदन् कपिञ्जलः। मर्माहताहं पुनरचेतनतामाप्नवम्। लब्धसंज्ञापि मुहुर्मुहुर्विलापमकरवम्।

एवं स्वपूर्वजीवनवृत्तान्तं श्रावयन्ती महाश्वेता कामप्यलक्षितान्तर्वेदनामनुभवन्तीव संज्ञाशून्यतामलभत। भूमौ संपतन्ती सा चन्द्रापीडेन सहसा संधारिता। शीतलजलोपचारेण च मूर्च्छातोऽवबोधिता।

## ४७:— तदाश्वासनवर्णनम्

चेतनामवाप्य महाश्वेता चन्द्रापीडं पुनः प्राह, "भृशं तत्र विलपन्ती चाहं तरलिकां चितां निर्मातुं समादिशम्। ततः कोऽपि अपूर्वो दिव्यकायो महातेजोवान् पुरुषो गगनादवतीर्य मम प्राणपतेः शवं कराभ्यां धृत्वा मां प्रत्यबोधयत्, "महाश्वेते ? त्वमिदानीमेतस्मात् पृथग्भव। शीघ्रमेव च समागमिष्यति सा वेला, यदा त्वं पुनरनेन प्राणेश्वरेण सह ससुखं सम्मिलिता भविष्यसि" इति।

## ४८ :—तन्मिलन हेतु तपो वर्णनम्

एवमुक्त्वा ऽसौमत्तः प्रच्छन्नो ऽभवत् । तदाकपिञ्जलः स्वं सहचरं गगने व्रजन्तमुद्वीक्ष्य तमनुगन्तुं मतिं कृत्वाऽचलत् । पश्यन्त्यामेव मयि तन्मित्रयुगलं तारामण्डले ऽदृश्यमभवत् । ततोऽहमार्त्तप्राणा विवशा भूत्वा तरलिकामेव स्वानन्यसहचरीं परिलक्ष्य समपृच्छम्, "किमिदानीं मया ऽनुष्ठेयमिति"। सत्यं खलु, अहं स्वामिना सह चितारोहणभिलषन्ती आसम्। परं तया प्रतिरोध्य मम विचारो नानुमतः । ततः प्रभृत्येवाहं राजसुखं, पितृसम्बन्धं च सर्वमेव संविहाय प्रियतमस्य वेशभूषां स्वीकृत्य तन्मिलनहेतोरत्रानुवसामि। जपतपः प्रभृति साधनायां च कालमतिवाहयामि ।

एवं हि महाश्वेतायाः पातिव्रत्यं समालक्ष्य चन्द्रापीडस्तां बहुमन्यमानो नानाविधैः सान्त्वनावाक्यैः संपरितोष्य तन्मनसि शान्तिमादधात् ।

## ४० :—कादम्बरीवर्णनम्

अनन्तरं तेन संपृष्टा महाश्वेता स्वसख्यास्तरलिकायाः वृत्तं संप्राह, "अस्माकं चतुर्दशवंशेषु एकस्य जन्म अमृतादभवत् । अस्माकं प्रजापतिना चित्ररथेन स्वविवाहस्तस्यैव कुलस्यैकया कन्यया" मदिरया" सह कृतः । ततः "कादम्बरी" समुत्पन्ना । सहपाठिनीसम्बन्धेन च आवयोः प्रगाढं प्रेम संजातम् । यदा हि कादम्बरी ममेदृशीं दशां श्रुतवती । तदा तयापि प्रणवचनमङ्गीकृतम् । "यावत् खलु महाश्वेतायाः मङ्गलदिनानि न

प्रत्यागच्छेयुस्तावदहमपि विवाहं न करिष्यामि। यदि च मे पितरौ मां बलात् कस्मैचिद् दास्यतस्तदाहं केनाप्युपायेन प्राणान् परित्यक्ष्यामि" इति ।

## ५० :—तरलिकानुपस्थितिकथनम्

तस्यास्तत्प्रणवचनं श्रुत्वा तत्पितरौ वृथा हठं विहाय तत्संवादं मत्सविधे ऽप्रेषयताम् । अत एव मया तरलिका कादम्बरीं सम्भाजयितु संप्रेषिता। तस्यां निर्गतायामेव भवानत्र समायातः" ।

## ५१ :—रात्रिचर्या वर्णनम्

ततः समुपस्थिता रजनी, महाश्वेता स्वशिलापट्टेऽस्वपत् । तद्दृष्ठ्वा चन्द्रापीडोऽपि स्वशिलाशयने, निजसहचरान्, पत्रलेखां च संस्मरन्, निद्रावशमुपगतः। प्रभाते तु द्वावेव नित्य-कर्मणि संलग्नौ ।

## ५२ :—तरलिका प्रत्यागमनम्

पूजावसाने तु सद्य एव तरलिका एकं बलिष्ठं युवानमादाय तत्रोपस्थिता। चन्द्रापीडस्याभिनवतारुण्यमालोक्य सा शङ्का-पंके निमग्ना। परं महाश्वेतया संपृष्टा सा अवदत्, "सर्वमेव तव सम्मतं कादम्बरीसमीपे मया संप्रकाशितम् । तदुत्तररूपेण चायं "केयूरकः" मया सह इह समायातः ।

## ५३ :—कादम्बरी प्रत्युत्तरादानम्

ततो महाश्वेतां स्वाभिमुखीं विलोक्य केयूरकोऽवदत्,

"कादम्बरी कथयति, यद् भवती किं मां परीक्षते ? किं वा स्वतो दूरेऽत्र राजप्रासादेऽवस्थितां मामालोक्य परिहासं कुरुते ? मम प्रणेऽपि वर्त्तते किमपि रहस्यम् । नाहं स्वसखीं दुःखितां त्यक्त्वा सुखोपहासं करिष्ये" इति । केयूरकस्य वार्त्तां श्रुत्वा महाश्वेतया प्रोक्तम्, "अद्य तिष्ठ, श्वोऽहं स्वयं कादम्बरीमुपगमिष्यामि"।

## ५४ :—कादम्बरी साक्षात्करणम्

अपरेद्युश्चन्द्रापीडमादाय महाश्वेता हेमकूटं संप्रस्थिता। चन्द्रापीडस्तु तत्र प्रविश्यापूर्वनगरदृश्यावलीं दृष्ट्वा अप्सरसां समूहं चालोक्याश्चर्यान्वितोऽभवत् । राजप्रासादद्वारमार्गेण यदाऽसौ कादम्बरीभवने समागतस्तदा तत्सौन्दर्यं संपश्यन्निःस्तब्ध इव संजातः। सा चापि अद्वितीयं तत्तारुण्यमालोक्य तदासक्ता संजाता।

## ५५:— स्वागतस्वीकरणम्

ततः कादम्बरी महाश्वेतामुपसर्प्य झटिति तां हृदयेनायोज्य सबहुमानमासने समुपावेशयत् । चन्द्रापीडमपि पृथगासने समुपवेश्य, महाश्वेतया सार्द्धं तत्रासने समुपविष्टा। महाश्वेता च प्रथमं चन्द्रापीडस्य परिचयं दत्त्वा ततोऽन्यविषयेषु-वार्त्तामकरोत् ।

## ५६:— ताम्बूलादानम्

तन्मध्य एव कादम्बरी महाश्वेतायै ताम्बूलं दातुं समुद्यता।

परं तया प्रोक्तम्, "अयंमहाभागः (चन्द्रापीडः) तवातिथिर्विद्यते। उचितं ह्येतद् यत्प्रथमं त्वमिमं सम्मानय"। ततो लज्जिता कादम्बरी । कथितं च तया यत् "नवागतमतिथिं सम्मानयितुं मे हृदि सङ्कोचो जायते। त्वमेव ताम्बूलदानेऽत्र मम प्रातिनिध्यं समाचर"। ततो महाश्वेतया पुनरुक्तम्, "अयि ? कुत्र कुत्र तवाहं प्रातिनिध्यं समाचरिष्यामि"। इत्थमुक्ता कादम्बरी किमप्यनुचार्य्य, वसनाभरणानि, तनुवल्लीं च संकोच्य कोमलकरकिसलयमग्रे कृत्वा चन्द्रापीडाय ताम्बूलमददात्। सोऽपि तद्गृहीत्वाऽचर्वयत् ।

## ५७:— विश्रामग्रहणम्

तदनन्तरमेका दासी तत्रागत्यासूचयत्, "भगवति, महाश्वेते ? भवतीं राजमाता संस्मरति"। तस्यां गतायां महाश्वेता अपृच्छत्, "कादम्बरि ? चन्द्रापीडं विश्रामयितुं कुत्र प्रबन्धोविहितः ? तया प्रोक्तम् , "मयातु अस्मै आत्मसमर्पणमेवकृतम् । तत्का कथाऽवासस्थानस्य। तदिदानीमिमं प्रमदावनस्य मणिभवने विश्रामयिष्यामि" । तदाकर्ण्य महाश्वेता राजमातुः समीपे संप्रस्थिता। दासीजनैरनुगम्यमानश्चन्द्रापीडश्च तन्मणिभवने समायातः।

## ५८:— कादम्बरीविचिन्तनम्

चन्द्रापीडं मणिभवनेऽवस्थाप्य कादम्बरी स्वशय्यासने विराजमाना समचिन्तयत् , "एवं हि नवागन्तुकेन सह प्रकट-

व्यापारोऽयं मे मर्यादानुकूलोऽस्ति न वा ? कुलशीलवत्यै कन्यायै किमेवं शोभते ? महाश्वेता, अपराश्च मे सख्यो मनसि किं सङ्कल्पयिष्यन्ति ?" एवं सञ्चिन्तयन्त्यामेव तस्यां केनाप्यागत्य तत्कर्णेऽभिहितम्, "त्वमत्र चिन्तामग्ना, तत्रासौ नवातिथिस्त्वयि क्लेशमवधार्य स्वपुरं गन्तुं समीहते।" एतच्छ्रुत्वा कादम्बरी समुत्थाय गवाक्षमार्गेण क्रीडापर्वत-निकटवर्त्तिनं वनमेकदृष्ट्या संद्रष्टुं संप्रवृत्ता।

## ५९:— प्रमदावनगिरिविहरणम्

कादम्बरी सकाशान्मणिभवने समागत्य चन्द्रापीडोऽपि मुहुर्मुहुरविचारयत्, "कादम्बरी खलु यत्प्रेमभावं संप्रदर्शयति, तत्सत्यमथवा केवलं वासनावसानमेवेति। यावद्धि सत्यासत्य-विनिश्चयो न स्यात्तावत् अनया सह प्रीतिबन्धनं दुःखायैव स्यात्।" एवमवधार्याऽसौ तत्रत्यान् नर्त्तकजनान् नृत्यगीतवाद्य-कार्येषु न्ययोजयत्। तदवसाने तु स्वयं बहिरागत्य प्रमदाव-नस्य प्राकृतिकं सौन्दर्यं समालोकयन् गिरिखण्डमारुह्य शिला-तलेसमुपाविशत्। तदा कादम्बरी अपि हर्म्याट्टालिकायां समुपस्थिता। ततः सा चन्द्रापीडसंदर्शने तथा प्रलीना आसीद्, यत्तया महाश्वेताया आगमनमपि न लक्षितम्। तत एव सङ्केत-प्रदर्शनेन महाश्वेतया चन्द्रापीडः सान्ध्यं कर्मानुष्ठातुं संप्रबो-धितः। सोऽपि च गिरिखण्डादवतीर्य्य तन्निमग्नः संजातः।

## ६०:— कण्ठहारोपहरणम्

स्नानध्यानभोजनादि कर्म संपाद्य चन्द्रापीडे सज्जितासने

समुपविष्टे सति कादम्बरीसेविकास्तत्रोपस्थिताः। यथोचितं सत्कृत्य, "मदलेखया" एकं कण्ठहारं तस्मै समर्पयन्त्या प्रोक्तम्, "श्रीमन्? इयं हि माला महोदधिमथनवेलायां संप्राप्ता। कादम्बरी प्रेमोपहारमिमं भवते संप्रेष्य संप्रार्थयति, यदि भवान् कण्ठहारमिमं स्वकण्ठे संधारयति, तदाहमात्मानं सौभाग्यसम्वर्धितं मन्ये।"

## ६१ः— स्वीकृत्य तद्धारणम्

मदलेखायाः प्रेमालापं श्रुत्वा चन्द्रापीडोऽवदत्, "राजकुमार्याः सन्देशं श्रावयित्वा त्वं मां किमर्थं लज्जयसे? नाहं शक्तः खलु तस्या आज्ञामननुमोदयितुम्।" एवमुक्त्वाऽसौ तं कण्ठहारं गृहीत्वा स्वकण्ठेऽधारयत्। विविधवार्त्तालापं कृत्वा च मदलेखां प्रत्यगमयत्। ततः कादम्बरी पुनर्भवनाट्टालिकामारुह्यापश्यद्, यत् "चन्द्रापीडो हि तां मालां कण्ठे कृत्वा शिलाखण्डे समुपविश्योपवनस्य शोभां संपश्यति।" संप्राप्ते निशागमे सा राजभवने प्रत्यागता। ततश्चन्द्रापीडोऽपि प्रत्यावर्त्य रात्रिचर्यायां संलग्नः।

## ६२ः— कादम्बरीसम्भारप्रदर्शनम्

भुक्त्वा चन्द्रापीडः शयनागारे संप्रविशन् केयूरकेण संसूचितः, "कादम्बरी समागच्छति" इति। किञ्चिदुत्तरयति एव तस्मिन् सा तत्र समुपस्थिता। स्वागतपूर्वकं तेन सा ससम्मानं पृथगासने समुपवेशिता। तस्याः सद्भावं, प्रेम-

प्रवणं चातिथ्यं संप्रशंसन चन्द्रापीडस्तस्यै अनेकान् धन्यवादान् प्राददात् । श्रुत्वा तु सा भृशं प्रमुदिता। परं व्रीडावनतं शिर-उपरि नाकरोत् । ततो द्वयोर्मध्येसुचिरं यावत् लोकचर्चा समारब्धा। महति रात्रिकाले गते सा समुत्थाय स्वकीये शयनागारे समागच्छत् ।

## ६३:— चन्द्रापीडप्रत्यावर्तनम्

अपरेऽहनि नित्यं कर्म समाप्य चन्द्रापीडः केयूरकात् प्रियतमायाः सन्देशमाकर्ण्य, ज्ञात्वा च यत्सा महाश्वेतया सह मन्दरप्रासादमलंकुर्वन्ती आस्ते, सोऽपि तत्र गत्वा महाश्वेतायाः संकेतेनानुमतिमयाचत। तया च कादम्बरी संप्रोक्ता, "सखि ? चन्द्रापीडोऽधुना स्वनगरं प्रयातुमीहते। केवलं तव सद्गुण-सत्कार-भारभरितस्तवाग्रे स्वाभिप्रायं न संप्रकाशयति।" श्रुत्वा साऽकथयत्, "अहं तु अस्य समाक्रीता दासीवास्मि। कथं चास्याशाविरोधं प्रकुर्याम् ।" एवं संभाष्य तया केयूरकसहाया अपरेऽनुचरास्तेन सह तत्सैन्यसमीपे प्रस्थातुं संप्रेषिताः। चन्द्रापीडः सर्वेभ्योमधुरालापपूर्वकमनुज्ञामादाय सेवकजनैः सह स्वसैन्यदिशं संप्रस्थितः। संप्रचलन् चन्द्रापीडो महाश्वेतां कादम्बरीं च स्नेहेन संप्रेक्ष्यावदत् । "यदा खलु भवतीनां वार्त्तासु संसारचर्चा सम्भवेत्, तदा यथाकथञ्चिदहमपि संस्मरणीयः, एतेनाहमात्मानं सौभाग्यवन्तं स्वीकरिष्ये।"

## ६४:— स्वसैन्यसंप्रवेशनम्

मार्गे संगच्छन् चन्द्रापीडः प्रतिक्षणं कादम्बरीमनुगम्य-

मानामिवामन्यत। परं पश्चाद्दर्शने तु निराशाफलमेव संलभते स्म। एवमेव पन्थानमतिक्रम्यासौ स्वसैन्ये प्राविशत्। कादम्बरी-सेवकान् सर्वानेव च संपरितोष्य प्रत्यावर्त्तयत्। सेनाजनैस्तु तस्मिन् समागते सति हर्षोत्सवोऽनुमतः। सर्वा निशा गन्धर्व-नगरचर्चायां समतीता।

## ६५ः— केयूरकोपसरणम्

प्रातस्तु चन्द्रापीडः स्नानध्यानावसाने सभायामगच्छत्। तत्र तेन केयूरकागमनसंवादः संश्रुतः। तं सभायामुपस्थाप्य, सम्मानपूर्वं च पार्श्वे समुपवेश्य चन्द्रापीडेन कादम्बरीमहा-श्वेतयोः कुशलेतिवृत्तं संपृष्टम्। स आह, "महाश्वेता संप्रार्थयति, यतः प्रभृति मया संदृष्टो भवान्, कोटिशः प्रयतमाना अपि नाहं समर्था भवतो मनोहारिणीं मूर्तिं विस्मर्तुम्। कादम्बरीदशावर्णनं तु सर्वथाऽशक्यमेव। यदि च भवान् धृष्टतां नानुभवेत्, तदा पुनर्दर्शनदानेनानुकम्पनीयाः वयम्। वयं हि जन्मानुजन्मनि भवत ऋणं शिरसि संधारयि-ष्यामः। अन्यच्च, भवान् कादम्बरीस्नेहार्पितं तं कण्ठहारमपि विस्मृत्यात्रैवात्यजत्, तदेनं गृहीत्वाऽस्मान् सफलीकरोतु" इति।

## ६६ः— पुनः प्रस्थानम्

ततस्तं कण्ठहारं केयूरकाद् गृहीत्वा चन्द्रापीडस्तं रहसि-निनीय कादम्बरीवृत्तमपृच्छत्। तस्याः विरहावस्थां संपरिज्ञाय-

चासौ तदा आत्मानं प्रतिरोद्धु ं नाशक्नोत्। सेनाभारं वैशम्पायने समुत्सृज्य स्वयं पत्रलेखां स्वानुचरींविधाय कादम्बरी-समीपेऽगच्छत्।

## ६७:— कादम्बरीसम्मिलनम्

राजप्रासादे गत्वा चन्द्रापीडोऽजानद्, यत्सा हिमगृहेऽव-तिष्ठते। तत्रैव सोऽपि प्रयातः। तंसहसा तदा समायात-मालोक्य सा झटिति समुत्थाय सादरं तस्मै शुभासनमददात्। ततः पत्रमेखापरिचयज्ञानपूर्वकं तां स्वसहचरीं कृतवती।

## ६८:— तां समाश्वास्य पुनः प्रत्यावर्त्तनम्

स्नेहवार्त्तामारभमाणेन चन्द्रापीडेनोक्तम्, "प्रिये ? कथ-मेतावतीं क्लेशदशामनुभवसि ? यदि चात्राहं दोषभाक्, तदा दण्डमपि सम्भोक्तु ं समुद्यतोऽस्मि। तवारोग्यलाभाय तु यत्किमपि समौषधंकर्त्तु ं समीहेऽहम्।" तस्यैतद् व्यङ्गवचनं विज्ञाय सव्रीडा साऽवदत्, "दैव एव विजानीयात्, कीदृशो-मेव्याधिः। किं वा अस्यौषधमस्ति।" एवं सुचिरं यावत् तयोः हासपरिहासवार्त्ता संप्रचलिता। ततश्चासौ तां बहुशः समाश्वास्य पुनः स्वसैन्ये प्रत्यागच्छत्।

## ६९:— स्वगृहागमनम्

तत्र तेन स्वपितुर्मन्त्रिणश्च पत्राणि संप्राप्तानि। पत्रेषु वि-लिखितमासीत्, "वयं चिरात् खलु ससैन्यस्य तव दर्शनं विना

अधीरमतयः संजाताः। तदधुना सत्वरं गृहे समागन्तव्यम् ” इति। संप्रति पितृनिर्देशे, प्रेममार्गे च परस्परं युद्धमिव समारब्धम्। अन्ते च पितुराज्ञावशे प्रेमसम्बन्धः शिथिलोऽभवत्। चन्द्रापीडो वैशम्पायनं तत्र विनियोज्य, पत्रलेखा-मेघनादयोर्गन्धर्वनगरीतः प्रत्यागतयोः, तौ समादाय त्वयाऽऽगन्तव्यमिति तं विनिर्दिश्य, स्वयं कैश्चिदश्वारोहिभिः सह स्वपुरं संप्रचलितः। तत्र पथि एकस्मिन् विकटारण्ये कन्याप्राप्तये चण्डिकामाराधयन् कश्चिद् द्रविडश्चन्द्रापीडेन संदृष्टः। सोऽपि देवीं प्रणम्य तं द्रविडं च परिचाय्य रात्रौ तत्रैवावस्थितः। प्रातश्चोत्थाय स्वयात्रायां संप्रस्थितः।

### ७०:—स्वजनसन्दर्शनम्

राजभवने समागत्यासौ वृद्धपित्रोरानन्दमवर्धयत्। चन्द्रापीड आगच्छन्नेव प्रथमं पितुस्ततो मातुः पादावस्पृशत्। अनन्तरं राजभवनस्थै र्बन्धुजनैः सह सम्भाष्य, मन्त्रिणोगृहे समागच्छत्। तत्र च सर्वान् संतोष्य, स्वभवने समागत्य, भोजनादिकं विधाय, शयनेऽवस्थितः कादम्बरीध्याने सन्निमग्नोऽभवत्।

### ७१:— वैशम्पायनागमनम्

कतिपयेष्वेव दिनेषु वैशम्पायनोऽपि ससैन्यः स्वराज्ये समागच्छत्। चन्द्रापीडेन पत्रलेखा परिपृष्टा, यत् का दशा वर्त्तते कादम्बर्याः, कीदृशश्च तया तव समादरः कृत इति।

तया संप्रतिपादितम् , कादम्बरी महाश्वेता च ममातिथ्ये न कामपि त्रुटिमकुरुताम् । छायेव मां प्रतिपलं ते समरक्षयताम्। एकदा मया सह प्रमदावनस्थशिलाखण्डे समासीना कादम्बरी केनापि हेतुना उदासीना संजाता। मुहुर्मुहुर्मया संपृष्टा साऽकथयत् , "सखि, चन्द्रापीडो हि मां संक्लेशयति, तेन हि बलेन मयि आघातः कृतः। पत्रलेखे ? त्वमेव वद, यदहं कुलीना कुमारी कथं कुलस्य प्रातिकूल्यं समाचरेयम् " इति।

## ७२:— पत्रलेखाविज्ञापनम्

मया तस्याः रहस्यवार्त्तामजानन्त्या एवमुक्तम् , "कादम्बरि ? तवैतादृशैर्वाक्योपन्यासैरहं चन्द्रापीडं कथमपराधिनमजानीयाम् ।" तदा साऽकथयत् , "चन्द्रापीडः प्रत्यहं स्वप्ने मां प्रबाधते । कदाचिद् दास्या पत्रं प्रेषयति। कदाचित् स्वयमेव किमपि कथयति। जागृता चाहं सर्वं स्वप्नमेवानुपश्यामि ।" तदा मया प्रोक्तम् , "सखि, तिन्तिड्या अपराधे आम्रस्य किमुत्तरदायित्वम् ? तव दुःखस्य प्रमुखो हेतुस्तु कामदेव एवास्तु न खलु चन्द्रापीडः ।"

## ७३:— कादम्बरीदशावर्णनम्

ततः कादम्बरी कामस्य परिचयमपृच्छत् । तस्यै कामस्य स्वरूपं , कर्म, फलञ्च सर्वं सविशदं मया संविज्ञापितम् । साऽपि सर्वं मम कथनं सत्यममन्यत। ततो हि सा सामयिकक्लेशनिवारणोपायमपृच्छत् । मयोक्तम् , "त्वमपि-पारतन्त्र्यं

संविहाय स्वातन्त्र्येण स्वेच्छानुरूपं कमपि प्रेमास्पदं संप्राप्य, तेनास्यानङ्गस्य मानमर्दनं कारय। अस्मिन् विषये च ममैवं प्रतिभाति यदेकं प्रेमपत्रं संप्रेष्य त्वं पुनरिह चन्द्रापीडमामन्त्रयस्व।" ममादेशं स्वीकृत्य कादम्बरी संप्राह, "यदाऽसौ प्रथमं स्वयमत्रागतस्तदा मया किं कृतम्, पुनरागते च किं करिष्यामि। पत्रलेखे ? यदुचितं तत् त्वमेवाधुना कुरु।" ततोऽहं तस्याः सन्देशमादाय, अत्र समायाता।

## ७४:— चन्द्रापीडविचिन्तनम्

एवं कादम्बरीदशां वर्णयित्वा पत्रलेखया पुनरुक्तम्, "भद्रमुख ? वस्तुतस्त्वं वज्रहृदयोऽसि, योहि दथाविधां तां संविहाय स्वयमिह समायातः। नैतदुचितं तवाचरणम्।" चन्द्रापीडस्तु तदुक्तं श्रुत्वा सुप्रयतमानोऽपि धैर्यं नालम्बत। विचलितं हि तस्य मनः। तदानीमेव राजमातुः सन्देशं मत्वा पत्रलेखा तदन्तिके गता। चन्द्रापीडश्च चिन्ताकुलो विचारसागरे निमज्जन् प्रतिदिनं देहदौर्बल्यमलभत।

## ७५:—पुनः केयूरकागमनम्

एकदा क्षिप्रातीरेऽवस्थितेन तेन कादम्बरीमहाश्वेतयोर्विषये संविचारयता दूरे खलु केयूरकः समागच्छन् संदृष्टः। आगते च तस्मिन् चन्द्रापीडः सोत्कण्ठं कादम्बरीमहाश्वेतयोर्वृत्तं समपृच्छत्। स आह, "भद्र ? प्रत्यागते भवति प्रस्थानसमयं श्रुत्वा महाश्वेता तु विदीर्णहृदया किमप्य-

नुक्त्वा स्वाश्रमे समायाता। कादम्बरी च सम्मूर्च्छिता अभवत्। संप्राप्ते चैतन्ये सा मदलेखामवदत्, "चन्द्रापीडमन्तरा न कोऽपीतरो जन एतादृशोऽकारुणिकः सम्भाव्यते।" एतदुक्त्वा सा मौनमवलम्ब्याद्यावधि यावत् कमपि न सम्भाषते। न चान्नजलं गृह्णाति। केवलं शयनेऽवस्थिता संततमश्रु वर्षणं करोति। तस्याः शोकाकुलामवस्थामेवालोक्याहं कमपि सूचनामदत्वा भवदभ्याशेऽत्रायातः। तदधुना सत्वरमेव तथा समाचरणीयं, येन तयोरुभयोर्देव्योः प्राणहानि र्न स्यात्" इति।

## ७६:— चन्द्रापीडस्यातुरत्वम्

एतत्समाकर्ण्य चन्द्रापीडः कादम्बरीमहाश्वेतयोः क्लेशहेतुमात्मानं मन्यमानः सदुःखं सम्मूर्च्छितोऽभवत्। संप्राप्तसंज्ञश्च पुनराह, प्रभो? नाहमासं कादम्बर्याः स्नेहेन सुपरिचितः। तदधुना मां तद्विनाशहेतुं मिथ्यापवादभयात् संरक्ष। यतो हि त्वमेव सर्वसंविधत्से। कृपया संकटमिमं परिहर।" ततोऽसौ पुनः कादम्बरी-दर्शनार्थी कथमपि शान्तो भूत्वा, केयूरकं विश्राम्य, स्वयमपि शयनागारे गत्वा, प्रियतमाविचिन्तन एव तां निशां सर्वामनयत्।

## ७७:— केयूरकप्रतिनिवर्त्तनम्

प्रातरुत्थाय चन्द्रापीडः, "कथं केयूरकं संवदेयम्, यदहं त्वया सह प्रयातुमक्षमः" इति सन्ध्यायन्नेव वैशम्पायनागमनवृत्तमश्रृणोत्। तदा केयूरकोऽवदत्, "देव? अहमग्रे

गत्वा ताभ्यां भवदागमनसुखदं संवादं संवदामि। भवता चाविलम्बमेव तत्र समागन्तव्यम्" इति। तद्वाक्यं श्रुत्वा चन्द्रापीडः प्रसीदन्निव मेघनादं, पत्रलेखां च केयूरकेण सह समप्रेषयत्। एकमाभरणञ्चोपहारं प्रदायावदत्, केयूरक ? त्वया एतत्कादम्बर्यै समर्प्य मद्वचनात्सा वक्तव्या, यत् "भवतीसकाशात् प्रत्यागतेन मया यदपराधितं, तत्क्षमस्व, धैर्यञ्च संधारय, सत्वरमेवाहमभ्युपेत्य भवतीं संतोषयिष्यामीति।"

## ७८:— पितुरनुज्ञादानम्

एवं केयूरकं संप्रेष्य, चन्द्रापीडो मित्रसंदर्शनवार्त्तामवलम्ब्य, आज्ञाप्राप्तये पितुरन्तिके गत्वाऽनुज्ञामयाचत। तारापीडस्तु तं संलक्ष्य, शुकनासं प्रत्युवाच, "मन्त्रिमहाभाग ? संबाधितो मे सुतः खलु अनङ्गबाणैः। तदिदानीं वधूसंप्राप्तये संप्रयतितव्यम्।" इत्युक्त्वाऽसौ शुकनासानुमतिं परिज्ञाय, चन्द्रापीडं गन्तुं समादिशत्।

## ७९:— स्कन्धावारे प्रगमनम्

पितुरनुज्ञामादाय चन्द्रापीडो मनोमोदकानि समास्वादयन् "स्कन्धावार" प्रदेशे गत्वा वैशम्पायनवृत्तमपृच्छत्। स्वजनेभ्यश्च किमप्युत्तरमनाकर्ण्य स्वल्पं कोपमपि प्राकाशयत। तदा सेनानायकैः समाहितम्, "देव ! धैर्यं संधार्यताम्। सर्वं हि तदितिवृत्तं स्वयमेव प्रकाशमेष्यति।" एतदाकर्ण्य शङ्कान्वितः

चन्द्रापीडः "वैशम्पायनो जीवत्येव" इति मत्वा कथञ्चिद् धैर्य-मधारयत्।

## ८०:— वैशम्पायनवृत्तसंश्रवणम्

तदा केनाप्यनुजनेन संश्रावितम्, "देव! अच्छोदसरस्तीरे तन्माहात्म्यं श्रुत्वा वैशम्पायनः प्रत्यागमन-प्रसङ्गमुत्सृज्य तत्रैवाऽवसत्। परमेश्वर एव संविजानीयाद्, यत् किं संजातं तदुपरि, यत्तेन गृहागमने महदौदासीन्यं संप्रकाशितम्। अस्माभिः सुचिरं संप्रबोध्यमानोऽपि सचिवसुतः स्वमभिप्रायं न प्राकाशयद्, न चैवात्रागच्छत्। कांश्चित्सैनिकान् तद्रक्षणेऽवस्थाप्य, भवत्सविधे संसूचयितुमेव वयं केचनात्रायाताः। भोजनार्थं विनिवेदितोऽसौ ह्यस्मान् समुपादिशत्, "यूयं मम जीवनाशां विहाय, प्राणप्रियस्य राज्ञः सुखेषु मतिमदद्त"। देव! भवतः सुहृत् संप्रति तस्यैव सरसो वारि पीत्वा, तत्तीरस्थवनफलानि च भुक्त्वा, यथा कथञ्चिद् जीवति। परं सावधानतया प्रतिक्षणं किमपि विलुप्तं सुप्रियं वस्तु समन्वेषति।"

## ८१:— बन्धुजनेषु तद्वृत्तसंश्रावणम्

एवं हृदय-धनस्य सुहृदः परमौदासीन्यं समाकर्ण्य चन्द्रा-पीडोऽपि महति कौतुके पतित्वा विविधप्रश्नेषु आत्मानम-क्षिपत्। सुविचार्य तु निर्णीतं तेन यत्, "क्वचिदपि प्रस्था-नात्पूर्वं पितरौ, मन्त्री, तत्पत्नी च वैशम्पायनावस्थया संसू-चयितव्याः। तदाज्ञया च तदन्वेषणे संप्रयतितव्यम्।" विनि-

श्चित्यैवं चन्द्रापीडः स्वराज्ये प्रत्यावर्त्य तारापीड-शुकनास-प्रभृतीन् सर्वं तद्वृत्तमश्रावयत् । तच्छ्रुत्वा सचिव-दम्पती तु उच्चैररुदिताम् । तारापीडेनोक्तम्, "चन्द्रापीड एवास्य दुःख-स्याविष्कर्त्ता । स एवाधुनास्यापराधस्य दण्डभागपि वर्त्तते ।"

## ८२:— मन्त्रिणोमन्तव्यम्

एवं हि वृद्धराज्ञः कोपवचनानि श्रुत्वा शुकनासोऽवदत्, "महाराज ? रविः शीतलतां संव्रजेत्, अमृतं वा विषं सम्भवेत्, परं न कदाचिदपि चन्द्रापीडः कमपि दुर्व्यवहारं कर्त्तुं प्रभु-रस्ति। भवान् अविचार्य एव तं मिथ्यापवादेन सन्दूषयति। मम सुतेन हि स्वयमेव न कस्यापि वार्त्ताऽनुमता। सर्वमेतत् कालप्रभावेणैव संपन्नम्, येनाऽसौ स्वसख्युरपि चन्द्रापीडस्य वचनेषु न व्यश्वसत्।"

## ८३:— चन्द्रापीडप्रस्थानम्

एवं मन्त्रिणः सदुपदेशवाक्यानि मत्वा, पितुराज्ञां च गृहीत्वा, चन्द्रापीडो वैशम्पायनमन्वेष्टुं "इन्द्रायुध" हयमा-रुह्य संप्रस्थितः । क्षिप्रातीरे हि तेन पूर्वविश्रम विहितः । अपरेऽहनि च प्रभात एवाग्रे यात्रां समारभत ।

## ८४:— मेघनादसम्मिलनम्

असमाप्तायामेव तद् यात्रायां समुपस्थितो वर्षाकालः । तद् बाधितोऽसौ कार्यक्रममवरोध्य वर्षान्ते पुनर्यात्रायै संप्रचलितः ।

पथि संप्रचलन्नसौ अकस्मादेव मेघनादमपश्यत्। वैशम्पायनवृत्तं संपृच्छ्यमानो मेघनादोऽवदत्, "भद्र ? नाहं तस्या योगग्रहणवार्त्तां संजानामि, नैव चेदानीं "अच्छोद" सरस्तीरादागच्छामि । तद्वचनं श्रुत्वा चन्द्रापीडस्तमपि समं समादायाग्रेऽगच्छत् ।

## ८५ः— महाश्वेताश्रमे गमनम्

सानुचरश्चन्द्रापीडो वैशम्पायनमन्विषन् "अच्छोद" सरस्तीरे समागत्य, तं च तत्रापि अविज्ञाय, चिन्ताकुलोऽभवत् । ततश्च, "पत्रलेखया ममात्र समागमनं श्रुत्वा, मे सुहृत् क्वचिदन्यत्र प्रधावितः" इति मनसि संधार्य चन्द्रापीडो महाश्वेतां सम्मिलितुं तदन्तिकेऽव्रजत् । "मामालोक्य सा प्रमुदिता भविष्यतीति" तस्याशा तत्र गत्वाऽफलीभूता । तामपि शोचनीयावस्थायां दृष्ट्वा साश्चर्यं चन्द्रापीडः, कुशलं किं वा, इति परिचिन्तयन् कादम्बरीकृते मङ्गलकामनामकरोत् । महाश्वेताया औदासीन्यहेतुं संजिज्ञासमानश्च तरलिकामभ्युपेत्य सोत्कण्ठं समपृच्छत् ।

## ८६ः— वार्त्तारम्भणम्

तरलिका तु स्वयं किमप्यनुक्त्वा महाश्वेतायां दृष्टिं प्राक्षिपत् । तदा महाश्वेता, अश्रूणि संप्रमार्ज्यावदत्, "महाभाग ? साम्प्रतं पूर्वोक्तकथासदृशीमेवैकां नवीनां कथां श्रावयामि । येन भवानपि सरोमहर्षमश्रूणि संविमोच्यते ।"

## ८७:— महाश्वेताकथनम्

साऽश्रावयत्, "भद्र ? भवति संप्रयातेऽहं तच्छ्रुत्वा सदुःखं कादम्बरीमपि संविहाय स्वाश्रमेऽत्र समायाता। एकदा गुहा-बहिर्भागे समुपविष्टां मामालोक्य, कश्चिद् युवा, इतः पर्यटन्, अभ्यागत्य, मम सौन्दर्यं संप्रशंसन्, तपस्विनीवेशं च संप्रति-षेधयन्, मयि स्वप्रेम इव समज्ञापयत्। अहं तु तद् दुर्व्य-वहारेणभिन्नहृदया, तस्मिन् जातशङ्का अभवम्। ततो मया-ऽभिहिता तरलिका, यत् "इमं महाशयं संज्ञापय, यद् भविष्ये-ऽयमत्रागमने मतिं मा कुर्यात्" इति। तया च ममाज्ञामनुस-रन्त्या संविज्ञापितोऽसौ इतो गत एव।

## ८८:— तदश्रुवर्षणम्

कतिपयेषु दिनेषु पुनरसौ एकस्यां रात्रौ, यदा वयं ग्रीष्मार्त्ताः गुहाबहिर्भागेऽस्वपाम, परिधावन्नत्रागत्य, प्रालपत्, 'प्रियतमे ? पश्य, पश्य, मदनानुमोदकोऽयं चन्द्रो मम प्राणान् संहर्तुं समागच्छति। अहं चेह तवाश्रमे स्वसंरक्षणार्थं समायातः। तदधुना त्वं मां संरक्ष" इति। तस्येदं प्रलपितं श्रुत्वा सकोपं मया "तिर्यग्जातौ समुद्भव" इति संप्रशप्तोऽसौ तत्रैव नीरसतरुरिवा-पतत्। तत्पश्चात्, तत्सहचरैर्मया संविज्ञातं, यदसौ युवा श्रीमतः सुहृदासीत्" इति। एवं सम्भाषमाणा महाश्वेता पुनः सदुःख-मश्रूणि प्रामुञ्चत।

## ८९:— चन्द्रापीडसम्मूर्च्छनम्

महाश्वेतावार्तामाकर्ण्य चन्द्रापीडोऽवदत्, "भद्रे ? सुनि-

श्चितमेवैतद्, यदस्मिन् जन्मनि कादम्बरीलाभोऽसम्भव एवेति । तादृशं मेऽधुना सम्मन्त्रयस्व, येन हि जन्मान्तरे तामहं संप्राप्नुयाम् ।" एवं संवदति एव तस्मिन्, तद्देहो निर्जीव इव सम्भवन् पतनावस्थां समदर्शयत् । तद् दृष्ट्वा तरलिका तमाश्रयं दत्वा, महाश्वेतामाह, "भद्रे ? पश्य, पश्य, अस्य शरीरं संज्ञाशून्यमिव संजातम् ।" प्रियसखी-वैधव्याशङ्कया च सा भृशमरोदीत् । महाश्वेता अपि तद् दृश्यं संपश्यन्ती मूर्त्तिवज्जाड्यमभजत । चन्द्रापीडस्य सहचरास्तु तामेव सम्भर्त्सयन्तोऽनेकशः प्रवदन्तश्चाऽरुदन् । तद्वाहनाश्वः "इन्द्रायुधो"ऽपि तत्प्रभावितः साश्रुमुखोऽदृश्यत ।

## ६०:— काम्बरीप्रस्थानम्

अत्र तु एवं रोदनविलापव्यापारोऽभवत्, तत्र च पत्रलेखया चन्द्रापीडस्य समागमनं श्रुत्वा कादम्बरी तत्प्रतीक्षायां क्षणानि अगणयत् । विलम्बे सति सा सानुचरी समुज्वलवसना तद्दर्शनार्थं संप्रस्थिता । प्रचलनकाल एव तस्याः दक्षिणाक्षणा अमङ्गलं ध्वनितम् । परं व्याकुलहृदयापि सा मनो दृढं कृत्वाऽग्रे समचलत् ।

## ६१:= तद्विलपनम्

महाश्वेताश्रमाभ्याशमागत्य कादम्बरी शोकसंकुलं तत्रत्यं जनवर्गमालोक्य मनसि अशुभममन्यत । सन्निकटे गत्वा च तया निर्जीवो वल्लभदेहो दृष्टः । तदालोक्य सा सम्मूर्च्छिता । भूमौ

प्रपतन्ती तु सा मदलेखया सुप्रयत्नेन समालम्बिता। परं स्वयं मदलेखाऽचेतनतां गता। संज्ञाम्प्राप्य कादम्बरी पुनश्चन्द्रापीडशवं पश्यन्ती विलपन्ती च शिरस्ताडनं समारभत।

## ९२ः— मदलेखया तत्सम्भाषणम्

तदा कादम्बरीं सुदुःखितामालोच्य मदलेखा प्राह, "अयि ? किं त्वमपि प्राणान् विमोक्ष्यसे।" सा प्रत्युवाच, "मदलेखे ? मा भैषीः, अधुना हि ममाङ्गानि शिलोपमानि कठिनानि संवृत्तानि। न मे देहो विनंक्ष्यति। यतोहि मूर्च्छातोऽप्यहं संज्ञामाप्ताऽस्मि।" पुनश्च सा दीर्घं निःश्वस्य संप्राह, "हा, भगवन् ? त्वया मे आशानिर्वाहो नाङ्गीकृतः। अधुना ह्येवं कुरु, येन ममात्मा नश्वराद्देहात् पृथग्भूत्वा, प्रियतमान्तिक एव सद्यः सङ्गच्छेत्" इति।

## ९३ः— आकाशवाणीसंश्रवणम्

एवं प्रविलपन्त्या तया अनेकवार्त्ताः कथयित्वा मदलेखा चितानिर्माणे विनियोजिता। सा च विवशा तद्व्यरचयत्। कादम्बरी चन्द्रापीडशवमङ्के निधाय चितामारोहत्। सद्य एव तदा तच्छरीराद् ज्योतिरिवार्विभूतमदृश्यत। येन हि सर्वं तत्स्थानं संप्रदीप्तमिवाभवत्। ततः संश्रुता आकाशवाणी। यया संप्रोक्तम्, "कादम्बरि ? त्वं सती मा भूयाः, स्वंप्रियतमं निर्जीवमपि संरक्ष। समागते समये पूर्वयोगी पुण्डरीक इव चन्द्रापीडोऽपि पुनर्जीवितो भविष्यति" इति।

### ९४:— पत्रलेखया सहैवेन्द्रायुधसरोऽन्तर्गमनम्

गगनगिरमाकर्ण्य सर्वेऽपि साश्चर्यं मुखाभिमुखमपश्यन्। कादम्बरी च तदनुरोधेण चितातोऽवतीर्य प्रियतमशवं सुरक्षितमस्थापयत् । ज्योतिषः शीतलस्पर्शेन सम्प्राप्तचेतना पत्रलेखा तु शनैरुत्थाय, "इन्द्रायुध" इयमुपेत्य, "लोकान्तरङ्गते स्वामिनि नात्र त्वदीयावस्थानं युक्त"मित्युक्त्वा च तं, आत्मना सह एव सरसि प्रावेशयत् । तत्र चासौ प्रविशन्नेवान्तर्हितः । तत्स्थाने कश्चिद् ज्योतिर्मयाकृतिरपरः साधुरदृश्यत। तमालोक्य तु सर्वेऽपि विस्मिताः संजाताः। महाश्वेता तं निर्निमेषाक्षिभ्यां समपश्यत् । यतो हि सः तस्याः पूर्वपरिचित इव संप्रतिभाति स्म ।

### ९५:— तत्प्रश्नकरणम्

समुपेत्यासौ महाश्वेतामाह, "सुन्दरि ? संलक्षितोऽहं त्वया, न वा ?" सा तु सविशेषं तमालोक्य, परिचाय्य सादरं प्रणम्यावदत्, "मुने ? बन्धुसहितो भवान्, यतः प्रभृति गतस्तदद्यावधि नावलोकितः। तत्कथयतु भवान्, कीदृशी दशा वर्त्तते भवत्सख्युः ?"

### ९६:— तदुत्तरप्रदानम्

महाश्वेतामुखादेवं श्रुत्वा सोऽवदत्, "देवि ? तमनुगच्छता मया संदृष्टं, यदसौ मामनालोक्यैव चन्द्रलोकं प्रावि-

शत् । तत्र चैकस्यां रत्नालङ्कृतायां शय्यायां मम सख्युः शवमवस्थाप्य मामकथयत्. "रे शृणु, अहं चन्द्रोऽस्मि। अनेन जीवेन निरपराधी एवाहं पुनः पुनर्जन्मग्रहणे, प्रेम-पाशबन्धने च सदुःखमभिशप्तः । तदभिशापमसहमानश्चाहं सकोपं तदा इममपि प्रत्यशपम्, "यथा त्वमस्मिन् जन्मनि दुःखभाक् तथैव जन्मान्तरेऽपि स्याः ।" परं शान्ते प्रकोपे मया विचिन्तितं, यदयं चन्द्रवंशोद्भवायाः कन्यायाः महा-श्वेतायाः प्रियतमोऽस्ति, तदा भृशं पीड्यमानोऽप्यहं स्वशापव-चोऽन्यथाकर्तुं नाशक्नुवम् । मिथः शापवशात् आवां मृत्युलोके जन्मग्रहणे विवशौ अभवाव। त्वमिदानीं चिन्तां विहाय निवस। यावदस्य पापान्तो न स्यात्, तावदस्यशवश्चन्द्रकिरणैः सुरक्षितो भविष्यति । ततः प्राणधारणं कृत्वा प्रियतमया सह सुखमनुभविष्यति। मया चैतत्सर्वं महाश्वेतायै संप्रति-पादितम् । त्वञ्चेदानीं मुनीश्वरं श्वेतकेतुमुपेत्य, सर्वं सुनिवेद्या-स्य पापमोचनोपायं समापृच्छस्व" इति ।

## ९७:— स्वान्तर्दशावर्णनम्

चन्द्रदेवोपदेशमनुसत्याहं तमेव मुनिवरमुपगच्छन्, दुर्दैवेन कस्यचित् कोपावतारस्य जनस्य पथावरोधको भूत्वा, तेना-भिशप्तश्चाश्वत्वं गतः। तदा संरुदन्तं मां समालोक्य तेनोक्तम्, "गच्छ रे एकस्यैव व्यक्तिविशेषस्य संवाहनेऽवतिष्ठताम्, तस्मिन् मृते च पूर्वशरीरमवाप्स्यसि" इति। मया सप्रश्रयं विनिवेदितं, "महाराज, ममायमभिलाषो यदहं चन्द्राधीन

एव स्याम्, विज्ञातं हि मया, यत् शापवशो हि चन्द्रो भुवि जन्म ग्रहीष्यति" इति।

## ९८:— इन्द्रायुधस्वरूपकथनम्

ममाभिप्रायं ज्ञात्वा, सुविचार्य च सोऽकथयत्, "चन्द्रः तारापीडस्य, पुण्डरीकः शुकनासस्य पुत्रो भविष्यति। त्वञ्च "इन्द्रायुध" नाम्ना चन्द्रापीडस्य वाहनो भविष्यसि" इति। एवं संवदति एव तस्मिन्, अहं सरसि पतित्वा, "इन्द्रायुध" नामको हयोभूत्वा, बहिरागत्य, चन्द्रापीडस्य वाहनोऽभवम्। स्वकर्मानुसारं च मया असौ किन्नरमिथुनमनुधावितः। मम शासकस्य तस्य एव चन्द्रापीडस्य सुहृदासीत् पुण्डरीकः (वैशम्पायनः), यो हि तव शापेन मृत्युमवाप।

## ९९:— कादम्बरीप्रश्नकरणम्

कपिञ्जलवार्तां श्रुत्वा महाश्वेता सदुःखं तमाह, "अहो? अहं स्वमात्मानं पैशाचानुरूपिणं समनुभवामि। यतोहि मम हेतोस्त्वं प्रतिजन्मनि दुःखमनुभवसि। परंधन्योऽसि, यन्ममेदृशं क्रौर्यंमप्यगणयित्वा मङ्गलमेव मे कामयसे"। एतेन महाश्वेता कथमपि धैर्यमाप्तवती। कादम्बरी ततोऽपृच्छत्, "मुने! इन्द्रायुधेन साकमेव पत्रलेखा अपि तस्मिन्नेव सरसि संप्रविश्य प्रविलुप्ता। तस्याः किमभूत!"

## १००:— कपिञ्जलसंविश्वासनम्

तस्याः व्यथितवचोनिशम्य कपिञ्जलोऽवदत्, "भद्रे!

तस्मिन् काले यद्यत् सविशेषं कर्म संपन्नम्, तत्सर्वं नाहं संस्मरामि। परं, चन्द्रापीड-वैशम्पायन-पत्रलेखाप्रभृतीनां पुनर्जन्मनः परिज्ञानं श्वेतकेतोरस्ति। तदधुना तद्दर्शनमेवास्मत्कृते समुचितम्"। महाश्वेतां चासौ पुनराह, "देवि, यथा गिरिजा तपस्तप्त्वा भगवन्तं शिवं संप्राप्तवती, तथा त्वमपि तदनुष्ठाय स्वेच्छां संपूरय"। भगवदनुग्रहेण, नूनं त्वं पुण्डरीकचरणसेवासौभाग्यफलं समवाप्स्यसि" इति।

## १०१:— साधनाव्रतसंधारणम्

एवं कपिञ्जलस्याशापूर्णवचांसि मत्वा सोत्साहं महाश्वेता-कदम्बरी-चन्द्रापीडसहायकाः तच्छवं सुरक्षितं संविधाय, पुनर्जीवनाप्तिपर्यंतं तत्रैव निवासं समकल्पयन्। कादम्बरी तु सविशेषं तापसी भूत्वा प्रियतमपुनर्जीवनहेतोस्तद्दर्शनं संप्रतीक्षतेस्म। प्रथमेऽहनि सा योगिनीवेशं संधार्य प्रियतमशवमादाय दिनमयापयत्। द्वितीयेऽहनि सर्वैरवलोकितं यत् कामपि विकृतिमलब्ध्वा, तच्छवे अपूर्वा कापि चमत्कृतिरिवाविर्भूता। येन सर्वेऽपि सविश्वासमवदन्, सत्यमेव खलु समभिहितं गगनगिरा सति समये चन्द्रापीडः पुनर्जीवनमवाप्स्यति" इति।

## १०२:— वर्षायापनम्

शवविनाशचिन्तामपहाय कादम्बरी मदलेखया सर्वं तद्वृत्तं पित्रोरन्तिके संप्रेषितवती। सदुःखं च तां शिक्षितवती, यत् पितरौ मे न यथाऽत्रागच्छेताम्, तथा त्वं कुर्याः। यतो हि

तदागमनेन हि मेऽत्र साधनाभङ्गभयो भावीति। सा च तदनुसारं तत्पितरौ संसूच्य, पुनरागत्य, कादम्बरीं तयोरागननिषेधं समश्रावयत्। ततः कादम्बरी शान्तिपूर्वकं वर्षाकालमत्यवाहयत्।

## १०३:— राजपुरुषसमाधानम्

वर्षान्ते चैकदा मेघनादः समागत्य संप्राह, "देवि, अद्यावधियावत् चन्द्रापीडे गृहमनागते, चिन्ताकुलेन महाराजतारापीडेन, तन्मन्त्रिणा शुकनासेन च संप्रेरिताः बहवोऽन्वेषकजनाः कुमारस्य कुशलमकुशलं वेति संपरिज्ञातुमित एव समागच्छन्ति। मयातु सर्वेऽपि संबोधिताः, परं ते हि तच्छवमेवावलोकयितुं समीहन्ते"। कादम्बर्या सुचिरं तदा सुविचार्य तानानेतुं समादिष्टम्। ततस्तैस्तत्रागत्य निर्जीवश्चन्द्रापीडोऽवलोकितः। तमालोक्य भृशं संरुदतस्तान् कादम्बरी गगनगिरोक्तं सर्वमितिवृत्तं संसूच्य, धैर्यमतिं च संप्रदायावदत्, "यूयं प्रतिगच्छत, प्रत्यावृत्य च मे श्वसुरौ धैर्यसंधारणेन संपरितोषयत। सर्वमस्माभिरच्छोद सरस्तीरेऽवलोकितमिति संविज्ञाप्य, मे श्वसुरौ संदुःखितौ यथा न स्यातां, तथा कुरुत"। परं तैरुक्तम्, "भद्रे! अस्मान् परिम्लानमुखानालोक्य एव तौ सर्वं ज्ञात्वा, क्लेशितौ संभविष्यतः"। तदा कदम्बरीसंप्रेरितो मेघनादः "त्वरितकं" तैः सह अगमयत्। येन हि चन्द्रापीडवृत्तं संपरिज्ञाय, तत्पितरौ सर्वं कालोपलक्षितमिति मत्वा, धैर्यं संधारयेताम्। यतो हि "त्वरितकः" साद्यन्तं सर्वं तद्वृत्तं संविजानाति स्म।

## १०४:— विलासवतीपरिचिन्तनम्

कादम्बरीसम्मत्या, मेघनादनिर्देशेन च संप्रेरितः 'त्वरितकः'

राजानुजनैः सह प्रत्यावृत्य "उज्जयिन्याः" एकस्मिन् मन्दिरेऽतिष्ठत् । पुत्रकुशलं संजिज्ञासमाना महाराज्ञी विलासवती एकस्मिन् दिने देवपूजार्थं तत्रैव समायाता। कर्णोपकर्णिकया तया संश्रुतं, यत् कोऽपि चन्द्रापीडवृत्तं विदित्वा अत्र समागत इति। सद्य एव सा तत्रोपेत्य पुत्रक्षेमवार्त्तामपृच्छत् । सर्वैरेव तैर्जनैरभिहितम्, "मातः ! अस्माभिश्चन्द्रापीडः "अच्छोद" सरस्तीरेऽवलोकितः। सुविशदं च तद्वृत्तं भवती त्वरितकात् संश्रृणोतु"।

## १०५ः—तस्याः सम्मूर्च्छनम्

एतदाकर्ण्य संजातशङ्का सा तन्मुखमालोकयन्ती, साश्रुमुखी प्रत्यवदत्, "नाहमधुना किञ्चित् प्रद्यामि। यतोहि तस्यौदासीन्यसंग्रस्ताऽऽकृतिः, परिशुष्का जिह्वा, अवरुद्धश्चकण्ठः, एते स्पष्टं प्रमाणयन्ति, यन्मे हृदयधनश्चन्द्रापीडोऽकाल एव कालकवलोऽभूत्"। तदा "हा, दुर्दैव ! इदानीमहं क्व गच्छेयम्, कं खलु "पुत्र" इति सस्नेहं कथयेयम्, कश्च मां "अम्बा" इति संबोध्य समाह्लादयेत्"। एवं किल बहुधा विलपन्ती विलासवती निःसंज्ञाऽभूत् ।

## १०६ः— तारापीडसमागमनम्

तदा दासीजनैस्तस्याः संज्ञोपायं प्रकुर्वद्भिर्महाराजतारापीडस्य सविधे तत्संवादः संप्रेषितः। तदाकर्ण्य सोऽपि सद्य एव तत्रागत्य, महाराज्याश्चैतन्याप्तये प्रायतत। चिरेण खलु समुद्घाटितनयना सा महाराजाभिमुखमालोक्य पुनः संरोदि-

तुमारब्धा। तारापीडस्तु तां समाश्वासयन्नाह, "भामिनि ? प्रथममहं साद्यन्तं सर्वं तद्वृत्तं त्वरितकात्संप्रच्छामि। शुभमशुभं वा तद्विज्ञानानन्तरमेव यदुचितं भवेत्, तदनुष्ठातुं योग्यम्।" ततश्च त्वरितकेन सर्वं तस्मै संश्रावितम्।

## १०७:— त्वरितकविज्ञापनम्

तत्सकाशात् पुत्रस्यामङ्गलं श्रुत्वा महाराजोऽपि सोरस्ताडमरोदत्। तत्रत्यां शोकसंकुलावस्थामालोच्य, त्वरितकः, यथेमौ पुत्रवियोगेन संप्रपीडितौ जीवितं न जह्यताम्, तथाऽनुष्ठेयमिति सुमतिं कृत्वा, तौ संबोध्य, गगनगिरा संप्रकाशितं भावि रहस्यं सर्वं तयोरग्रेऽश्रावयत्। चन्द्रापीडस्य निर्जीवेऽपि देहेऽक्षतं तेजःसाक्षित्वं चाज्ञापयत्। तदाऽभूतपूर्वमिदं वृत्तमाकर्ण्य तौ रोदनं विहायान्योऽन्यमुखावलोकनपरौ अभूताम्।

## १०८:— शुकनाससमाश्वासनम्

आश्चर्ये पतितं तारापीडमालोक्य मन्त्री अकथयत्, "महाराज ? इहलोके सर्वेश्वरस्यैश्वर्यमयीं मायां विलोक्य हर्षशोकौ सदा परिहर्तव्यौ! भवानपि विरहवेदनां विस्मृत्य, परमेश्वरस्य गुणगानपुरःसरं मङ्गलवेलां संप्रतीक्षताम्। एतदपि सुखदमेव यत् चन्द्रदेवः स्वयं भवद्गृहे पुत्ररूपेणोत्पन्नः।" एवं परः शतानि शापवृत्तानि संश्राव्य, शुकनासः

शापान्ते हि चन्द्रापीडः सभार्योऽस्मानुपैष्यतीति, महाराजं महाराज्ञीं च समाश्वासयत् ।

## १०९:— तारापीडस्य मन्तव्यम्

तारापीडस्तु सर्वमुपदेशं श्रुत्वापि सभार्योऽमात्यसहितश्च चलित्वा, पुत्रशवं संदिदृक्षुः स्वाभिप्रायमकथयत् । सत्येवं धैर्य-संधारणं सम्भवेदिति मत्वा, तदनुसारमेव तारापीडः महाराज्ञीं, मन्त्रिणं, तत्पत्नीं, विशिष्टाँश्चापरान् नागरिकान् अग्रे कृत्वा, संप्रचलन्, सुतमुखं संद्रष्टुं "अच्छोद" सरस्तीरे समागत्य, महाश्वेतां कादम्बरीं च स्वागमनेनासूचयत् ।

## ११०:— महाराज्ञीसंरुदनम्

महाश्वेता तु विलज्जिताऽऽभ्यन्तरे संप्रविष्टा । कादम्बरी च श्वसुरौ समुपस्थितौ समालोच्य, सदुःखमचेतनतां गता । महाराज्ञी मन्दिरे संप्रविश्य सुकुमारं स्वं कुमारं निर्जीवं शिलाखण्डे शयानमिव समालोक्य सवेगं संरुदन्ती पुत्रस्नेह-कातरा तन्मुखं ललाटं चाचुम्बत् । विरहवेदनया मर्माहता सा तच्छवमङ्के विन्यस्य भृशं रोदितवती । तत्क्रन्दनमाकर्ण्य तदान्तिकस्थाः वन्याः पशुपक्षिणोऽपि तामनुसरन्तोऽरूरुदन् ।

## १११:— कादम्बरीसंप्रेक्षणम्

एवं शोकसंकुलं सहचरसंघमालोक्य तारापीडोऽवदत्, "प्रिये ? पश्य, तव पुत्रवधूः गन्धर्वकन्या कादम्बरी सम्मूर्च्छिता

वर्तते।" महाराज्ञी सहसा तामालोक्य, पुत्रपार्श्वतः समुत्थाय, कादम्बरीमुपेत्य, तामङ्के कृत्वा, तन्मुखमचुम्बत्। तरुणतनयमरणं, सुस्वरूपनववधूवैधव्यं च संस्मृत्य, सा पुनरश्रु वर्षणमकार्षीत्। हठात् संज्ञामवाप्य कादम्बरी, तदात्मानं स्वश्र्वा अङ्केऽवलोक्य, व्रीडावनतमुखी संजाता। ततश्चोत्थाय तत्पादयोः पतित्वा, अपरांश्च सम्मान्यजनान् यथोचितं समादृत्य, नमस्कृत्य च तेभ्यः सौभाग्याशीर्वचांसि समगृह्णात्।

## ११२:— तारापीडस्य वैराग्यम्

ततस्तारापीडो मदलेखया कादम्बरीं समुपादिशत् "पुत्रि? कथमपि लज्जावशाद्वा, न त्वया स्वसाधनाव्रते संत्रुटिः करणीया सोत्साहं चन्द्रापीडशवं संरक्षयमाणा त्वं भाविक्षेममार्गेऽग्रेसरा भव।" एतदुपदिश्यासौ बहिरागत्य, स्वसभासदो नागरिकांश्च संबोधयन्नाह, "अयि सज्जनाः? पुत्रपाणिग्राहानन्तरं मे संन्यासग्रहणाभिलाषस्तु दुर्दैवेन प्रतिकूलतामुपगतः। न चाहमधुना स्वराज्यं प्रतिगमिष्यामि। भवन्तः सहोदरस्नेहमिव गणयित्वा राजकार्यं सन्निर्वाहयन्तु। प्रजायाः शुभमशुभं वा भवद्भिः सर्वं संपरीक्ष्य राजसंचालनं प्रकर्तव्यम्।" एतदभिधाय तारापीडः सर्वान् पौरजनान् प्रत्यावर्त्त्य स्वयं तत्रैव निकटवर्त्तिनि निकुञ्ज कुटीं कृत्वा तपसि संलग्नोऽभूत्।

## ११३:— कपिञ्जलसुप्रयत्नम्

ततो हि कपिञ्जलो महामुनिं श्वेतकेतुपाश्रित्य पुण्डरीकस्य

पुनर्जन्मजनपदमपृच्छत्, तेन संप्रोक्तम् "महाश्वेतयाप्रशप्तोऽसौ साम्प्रतं शुकयोनिमासाद्य, महर्षिजाबालेराश्रमेऽवतिष्ठते।" एवं श्वेतकेतोः स्वसुहृदो वृत्तमादाय कपिञ्जलो जाबालेराश्रममगच्छत्। तत्र च जावालिसकाशात् स्वपूर्वजन्माघहेतुना शापमादाय, शुकयोनिमवाप्य, जीवता पुण्डरीकेण सर्वं ज्ञानं संश्रुतम्। एकदाऽसौ संस्कारप्रेरितस्तमृषिं प्राह, "भगवन्? समाज्ञापयतु भवान्, यदहं स्वप्रेयसीं संदृष्ट्वा, पुनरिहागमिष्यामीति।" तद्वचनेन संक्रुद्धो जावालिरुवाच, "रे मूढ़? पूर्वकृतं सर्वं विस्मृतं किम्? कुसमये यत्पुनः प्रेयसीसम्मिलनकामनां स्वहृदि जागरयसि?" तदाकर्ण्य शुकरूपः पुण्डरीको मौनमालम्बत।

## ११४:— शुकसमाधानम्

तदानीमेव केनापि शिष्येण महामुनिर्जाबालिः कपिञ्जलसमागमनेन संसूचितः। शुकरूपः पुण्डरीकोऽपि तदाकर्ण्य सस्नेहं तमानेतुं मुनिं न्यवेदयत्। प्रत्यावृत्ते च तच्छिष्ये कपिञ्जलः समुपस्थितः। तमालोक्य, स्वदशां च संस्मृत्य, शुकरूपः पुण्डरीकोऽरोदीत्। कपिञ्जलस्तु तं सप्रेम कण्ठे न्ययोजयत्। सुचिरं यावत् प्रेमाश्रुवर्षणपूर्वकं कपिञ्जलेन "महाश्वेतायाः, तातस्य तारापीडस्य च तपोवार्त्तां संश्राव्य, तं च शापान्तकालं यावत् धैर्यावलम्बनं कुरु" इति संविश्वास्य, तत्स्थानात् प्रत्यावर्त्तनं कृतम्।

## ११५:— शुकबन्धनम्

कपिञ्जलेगते सति एकस्मिन् दिने शुकरूपः पुण्डरीक-

स्तारुण्येऽवस्थितः, प्रेमावेगेन महर्षिस्थानं संविहाय महाश्वेताश्रमं संप्रस्थितः । पथि श्रान्तः सन् किञ्चिद् भुक्त्वा, पीत्वा च विश्रम्यमाणो निद्रावशं गतः । जागृतस्तु तदात्मानं कस्यचिद् बन्धकस्य बन्धने संपतितमालोक्य, सभीतः प्राणभिक्षां समयाचत । बन्धकोऽवदत् "अहं चाण्डालान्वयः, त्वां गृहीत्वा स्वप्रशास्तृदुहितुः करयोः समर्पयिष्यामि ।" इत्याचक्ष्यासौ शुकरूपिणं पुण्डरीकं चाण्डालराजकन्यायाः सविधेऽनयत् ।

## ११६ः— चाण्डालराजकुमारीसंभाषणम्

तत्रागत्य शुकरूपः पुण्डरीको हि तेषां कार्यपद्धतिमालोक्य, पर्याकुलितोऽस्पृश्यताभयेन न किमपि अखादीत् । दिनचतुष्टयानन्तरं चाण्डालराजकुमारी तमपृच्छत् "रे शुक ? किं त्वमात्मानमुच्चकुलानुजातं मत्वा, अस्मत्प्रदत्तमन्नं जलं वा न गृह्णासि ! कीदृशोऽयं ते धर्मः ? शास्त्रेषु तु स्पष्टमुक्तं, यत् फलजलादिषु न किमप्यस्पृश्यत्वम् ।" एवं शुकरूपः पुण्डरीकश्चाण्डालराजकुमार्याः ज्ञानोपदेशं श्रुत्वा, साश्चर्यमन्तश्चिन्तयन् , तस्यै च किमप्यनुक्त्वा, समौनं यावत् तत्प्रदत्तं फलजलोपकरणं स्वीकृत्याभक्षयत् ।

## ११७ः— शुकस्याश्चर्यम्

सुचिरं तत्र प्रतिवसन् शुकरूपः पुण्डरीक एकदा सुप्तोत्थितः स्वं पञ्जरं स्वर्णमयं, तन्नगरीं चामृतपुरीं संदृष्ट्वा, महत्याश्चर्ये निमग्नः, पुनः पुनरचिन्तयद्, यदहं कस्मादेत-

द्रहस्यं संपृच्छेयम्। राजा शू द्रकस्तु तन्मुखादेवं श्रु त्वा चाण्डाल-राजकुमारीं समाकारयत् ।

## ११८:— तस्याः सत्यप्रकाशनम्

सा तु समागत्य सप्रश्रयमश्रावयत्, "दयानिधे ? भवता शुकमुखात्तु तदितिवृत्तमधुना संविज्ञातमेव । तदिह मद् विषयेऽपि संश्रूयताम् । अहं हि अस्य माता लक्ष्मीरस्मि । अयं शापभ्रष्टोऽपि पुनरधर्मेतत्परोऽभूत् । तदा ह्यस्य जनकेन एतस्य संरक्षणार्थमहं संप्रेरिता । अहं च तद्रूपं संहृत्यानेन देहेनात्र यदा संप्रकाशमागता, तस्मादेव कालादस्य संरक्षणं करोमि । साम्प्रतं तु अस्य शापान्तकाल: समुपस्थित एव । अहमपि देहमिमं परित्यक्ष्यामि ।" इति संभाषमाणा एव सा गगनदिशमनुसरन्ती दृगगोचरा संजाता ।

## ११९:— शूद्रकात्मनश्चन्द्रापीडे प्रवेशनम्

एवं रहस्यपूर्णवृत्तां संशृण्वन् राजा शू द्रकोऽपि स्वपूर्व-जन्मकर्मणां ज्ञानमलभत । ततोऽसौ स्वप्रेयस्याः कादम्बर्याः मनोमोहिनीं मूर्त्तिं प्रतिपलमक्ष्णोरग्रे संविचरन्तीमिवामन्यत। तत एव समुपस्थितो वसन्तकालः । सर्वमेव जगत् कामदेव-दृशोलक्ष्यं भूत्वा मदोन्मत्तमिवाभवत् । शू द्रकोऽपि कामाधीनः प्रेयसीविरहव्याकुलो जातः। तदानीमेवापरत्र कादम्बरी अपि किमपि संध्यात्वा, चन्द्रापीडशवमभ्युपेत्य, सुप्रयत्नेन च तस्मै स्नानं दत्त्वा, संप्रोञ्छ्य, सुवसनैरलकृत्य, चन्दनादिसुगन्धि-

द्रव्यैः पवित्रमकरोत् । सा अपि कामशराहता इव, तद्वेगमसहमाना, मृतमपि प्रियतमं, यदाऽऽलिङ्गति, तदैव चन्द्रापीडोऽपि शयान इव संप्रबुद्ध्य समुदतिष्ठत् ।

## १२०:— सर्वबन्धुजनमङ्गलसंसूचनम्

अकस्मात्तमेवं पुनर्जीवितमालोक्य कादम्बरी किञ्चिदबिभ्यत। परं तेन सा प्रगाढमुरसाऽऽश्लिष्य संप्रोक्ता, "प्रिये ? मा भैषीः। ननु विगतो मे शापकालः । एतावत्कालमहं राज्ञः शूद्रकस्य शरीरे आसम् । शापसमाप्तौ तु तद्विहाय पुनरहं तव प्रियेऽस्मिन् देहे समागतोऽस्मि ।" एवं स्वप्राणेश्वरस्य वाक्यमाकर्ण्य प्रेमातुरा साऽपि तेन सहाऽऽश्लिष्टा संजाता । अनन्तरं चन्द्रापीडोऽवदत्, "पुण्डरीकस्याप्यस्तङ्गता शापवेला। सोऽपि समागच्छति एव।" इत्युक्तवति एव तस्मिन् स्पष्टमदृश्यत, यद् गगनमण्डलात् "पुण्डरीकः" कपिञ्जलेन सह अवतरन्नागच्छति । भुवि समवतीर्य, सम्मुखस्थो हि सः चन्द्रापीडं परिचाय्य, हृदयेनायोजयत् । अनन्तरं च महाश्वेतामालिङ्गत्। एवं द्वावपि प्रियवयस्यौ स्वस्वप्रेयस्या सह मिलित्वा, पूर्वप्रेमस्मरणपूर्वकं मिथो वार्त्तामकुरुताम् ।

तदा महाश्वेता कादम्बरी च शनैरुत्थाय स्वस्वश्वसुरौ प्रणम्य, मङ्गलसंवादेन समतोषयताम् । तदनन्तरं च केयूरकं संप्रेष्य, चित्ररथ-हंसौ अपि शुभमिलनवृत्तेनासूचयताम् ।

## १२१:— सर्वबन्धुजनसम्मिलनम्

महाश्वेताप्रभृतिभिश्चन्द्रापीडस्य, पुण्डरीकरूपस्य वैशम्पा-

यनस्य च पुनर्जन्मवार्तां श्रुत्वा, महाराजस्तारापीडो महाराज्ञी विलासवती च सप्रमोदं तद्दिशमगच्छताम् । ततश्चन्द्रापीडोऽपि सखासहायः स्वपितरौ प्रणमितुं प्राचलत् । अभिमुखमागत्य च तताभिवादनार्थं मस्तकमनमयत् । परं, तारापीडः, "त्वं पुत्रभूतोऽपि चन्द्रावतारत्वेन मया सम्माननीयः ।" इत्युक्त्वा तन्मस्तकनमनमन्तराल एवावरोधयत् । ततश्चन्द्रापीडो वैशम्पायनश्च यथाक्रमं स्वेष्टजनान् समभिवाद्याशीर्वचांसि समगृह्णीताम् । महाराज्याः विलासवत्याः, मन्त्रिपत्न्याः मनोरमायाश्च पुत्रवियोगावसरे यथा वनचरैरपि प्राणिभि दुःखानुभवोऽनुदर्शितस्तथैवाद्य सुखसमयेऽपि ते सर्वे प्रसन्नवदनाः केचित् परिनृत्यन्तः, केचित् समुत्कूर्दन्तः, केचिच्च सुमधुररवैर्वनं मुखरयन्तो हर्षमदर्शयन् ।

## १२२:— चन्द्रसन्देशग्रहणम्

संपन्ने शिष्टाचारे कपिञ्जलो मन्त्रिणं शुकनासं संबोधयन्नाह, "अमात्यमहाभाग ? चन्द्रदेवेन हि समादिष्टं, यन्मया पुण्डरीकशरीरं बहुकालं सुरक्षितं कृतम् । परं तव मोहात्तुभ्यं प्रदीयते । वैशम्पायननाम्नाऽयं ते पुत्रोऽभूत् । अतस्त्वयाऽयं तन्नाम्नैवानुमन्तव्यः ।" एवं कपिञ्जलमुखाच्चन्द्रदेवस्यादेशं संविज्ञाय, मनोरमासहायः शुकनासः सानुनयं तच्छिरसि समधारयत् । अनन्तरं महाराजोमन्त्री च तत्रैव स्थित्वा रात्रिचर्यायां प्रतिव्यक्तीनां कथाकलापान् श्रुत्वा, प्रभातमुपागच्छताम् ।

## १२३:— चित्ररथहंसयोः समागमनम्

प्रातरेव चित्ररथो हंसश्च दलबलसहितौ तत्रागत्य तद्वनमेव प्रमोदवनमकुरुताम् । सर्वैः खलु सुचिरं तत्रोषित्वा तत्स्थानं राजाप्रासादोपमं समलङ्कृतम् ।

## १२४:— स्वाधिकारप्रदानपूर्वकं कुमारयोर्विवाहकरणम्

एकदा चित्ररथो हंसश्च तारापीडमकथयताम्, "महाराज ? संप्रति स्वनगरे गन्तव्यम् । आवामभिलषावो यत् कादम्बरीं महाश्वेतां च स्वानुरूपयो श्चन्द्रापीडवैशम्पायनयोः करयोः समर्प्य, जामातृस्कन्धयोश्च स्वराज्यभारं संस्थाप्य, अवशिष्टं जीवनमीश्वराराधने समापयिष्यावः ।" एतच्छ्रुत्वा तारापीडोऽवदत्, "भ्रातरौ ? स्वदेशे, परदेशे, नगरे, वने वा, यत्र हि जीवः सुखमनुभवेत्, तत्रैव तत्कृते राजभवनम् । अतो युवामधुना राजकुमारं ससहायं स्वराज्ये नीत्वा, सानन्दं विवाहोत्सवं संप्रकारयताम् । अहं तु स्वजीवनमिहैव स्थित्वा, प्रभोराराधने संवाहयिष्यामि ।" एवं तत्स्थैर्यं समालोक्य चित्ररथो हंसश्च विवशौ भूत्वा राजकुमारप्रभृतीन् नगरे समानीय, महता समारोहेण द्वयोरेव सहचरयोर्विवाहं कारयित्वा, समग्रं च स्वराज्यमपि तत्करयोः समर्प्य, स्वयं वनवासिनौ संजातौ ।

## १२५:— पत्रलेखावृत्तकथनम्

संजाते पाणिग्राहे कादम्बरी चन्द्रापीडेन, महाश्वेता च

पुण्डरीकरूपेण वैशम्पायनेन सह ससुखमवसताम्। कदाचित् सप्रसंगं कादम्बरी चन्द्रापीडं पत्रलेखाविषयेऽपृच्छत् । तां समाधातुं सोऽकथयत्, "प्रिये ? सा तु रोहिणी आसीत् । पत्रलेखारूपेण जन्म गृहीत्वा सा आवयोः सहावसत्। प्राप्ते च काले लोकान्तरं गता। नैवाधुनाऽऽवां तां संद्रष्टुं प्रभवावः।

## १२६:— उपसंहरणम्

एवं ससुखं स्वराज्ये स्थित्वा चन्द्रापीडः पश्चाद् राज्यभारं पुण्डरीकरूपे वैशम्पायने संस्थाप्य स्वयं प्रेयसीसहितोऽभिसंचरन्, कदाचित् चन्द्रलोके, कदाचिद् गन्धर्वनगरे, कदाचित्तु स्वपितुः राज्ये सानन्दं प्रत्यवसत् ।

---

॥ समाप्ता ॥

मुद्रक : शेर-ए-स्टेट प्रिंटर्स, गुमट बाज़ार, जम्मू (तवी)

